लव। ता पसीददु भअवदी, परित्ताहि इमादो जीविदमरणादो पिअसहीं, तवावि एसा दुहिदा ज्जेव्व। (प)

काम। अयि, सरले! किमत्रभवत्या मया शक्यं कर्त्तुम्? प्रभवति प्रायः कुमारीणां जनयिता दैवञ्च। यच्च किल कौशिकी शकुन्तला दुष्मन्तं अप्सराः पुरूरवसञ्चकमे, इत्याख्यानविद आचक्षते, वासवदत्ता च राज्ञे सञ्जयाय पित्रा दत्तमात्मानमुदयनाय प्रायच्छत् इत्यादि, तदपि साहसिक्यमित्यनुपदेश्यमेतत्, (२६) सर्वथा,—

---

(प) तत प्रसीदतु भगवती, परित्रायस्व अस्माज्जीवितमरणात् प्रियसखीं, तवाप्येषा दुहितैव।

---

(प) लवेति। जीवितं जीवनमेव मरणं तस्मात्। निष्फलत्वदुःखबहुलत्वाभ्यां ईदृग्-जीवितस्य मरणतुल्यत्वादिति भावः। दुहितैव कन्यातुल्यैव। तथाचापत्यनिर्विशेषत्वे हेन रक्षणीया वा यथास्या नन्दनार्पणं न भवेत्तथा यतितव्यमिति भावः।

(२६) कामेति। विलम्बमन्दे तद्विषयं नावगच्छसीति सूचयितुमामन्त्रयते—सरले इति। ऋजुप्रकृतिके इत्यर्थः। अत्र अस्मिन् नन्दनार्पणविषये, अत्रभवत्या निरतिशयतौन्दर्य-सद्गुणादिभिः सर्वजनपूज्यायाः मालत्या इति शेषः, किं कर्त्तुं मया शक्यं न किमपि शक्य-मित्यर्थः। अस्माकमर्हे पिच नन्दनानुवर्त्तित्वे किं कर्त्तुं मया शक्यम्? न किमपीत्यपि निरर्थः। अकारणत्वे हेतुमाह—प्रभवतीति। कुमारीणामिति दाराणामिति शेषः। नाम्बं-विवाहे कन्यानाम्बरेरपि प्रभुत्वमवीचादिदयितुं प्रायःपदमुपात्तम्। साहसे मतिं निवेदयितुं प्रकृतात् पुराणवं कर्त्तव्यतः कीर्त्तयति—यच्चेति। कौशिकस्य विश्वामित्रस्यापत्यं स्त्री कौशिकी। दुष्मन्तमिति चकमे इत्यनेनान्वयः। अप्सरा उर्वशी पुरूरवसं तन्नामानं चन्द्रवंशोद्भवराजानं चकमे अनुरागवशेनात्र कामयते स्म। आख्यानविदः पुरावृत्ताख्यायिकाप्रवर्त्तिनः आचक्षते कीर्त्तयन्ति। दत्तं दातुमङ्गीकृतम्। प्रायच्छदित्यादीति आचक्षत इत्यनेनैवान्वेति। साहसिक्यं साहसिकस्य कर्म, इति हेतोः अनुपदेश्यमेतत् वाम्भवेरुपदेशादीनां आत्मीयस्थितता यदि

---

(প) লব। অতএব ভগবতী আপনি প্রসন্না হউন, প্রিয় সখীকে এই জীবন্মৃত অবস্থা হইতে রক্ষা করুন। মালতী ও আপনার কন্যার তুল্য।

(২৬) কাম। অয়ি সরলে! তোমাদের সকলপূজ্যা মালতীর নন্দনার্পণ বিষয়ে আমি কি করিতে পারি? যে হেতু কুমারীদিগের বিবাহ বিষয়ে পিতা এবং দৈবই প্রভু হয়। তবে বিশ্বামিত্রকন্যা শকুন্তলা দুষ্মন্তকে ও

राज्ञः प्रियाय सुहृदे सचिवाय कार्य्यात्
दत्त्वात्मजां भवतु निर्वृतिमान् अमात्यः ।

---

स्वयमेव प्रवर्त्तयाः, तदास्माभिः साहाय्यं कार्य्यमिति भावः। कन्यपदोपादानादीदृगवस्थायां उपदेष्टव्यमित्यर्थोऽपि ध्वन्यते ।

अत्र भङ्ग्या साहसार्थोत्साहप्रदर्शनेन भेदो नाम मुखसन्ध्यङ्गं, "भेदः प्रोत्साहना" इति दर्पणधृतलक्षणात्। आख्याननामा निदर्शननामा च नाट्यालङ्कारः क्रमेण। तल्लक्षणं यथा— "आख्यानन्तु तदुद्दिष्टं यत् पुरावृत्तकीर्त्तनं । कथनादन्यचेष्टानां साध्यसिद्धिर्निदर्शन"मिति ।

"स्त्रियां बहुष्वप्सरस" इत्याद्यमराद्यनुशासनैरप्सरस्शब्दस्य बहुत्वविधानस्य प्रायिकत्वा-दवाप्सरा इत्येकत्वनिर्देशेऽपि न च्युतसंस्कारताख्यदोषः। अत एव ज्ञातत्वपरिशिष्टकृता श्रीपतिना "वा च जलौकसः समा अप्सरस" विकल्पेनैव बहुत्वं विहितमित्याद्यनुसन्धेयम् ।

पुराकिल कण्वो नाम महर्षिर्विश्वामित्रेण मेनकायामुत्पादितां कन्यां मातापितृभ्यां परित्यक्ता-मरण्ये संप्राप्य कृतशकुन्तलानामधेयां प्रतिपालितवान्। ततः प्राप्तयौवनां तामतिथिसत्कारे नियोज्य तपश्चरणार्थं गते महर्षिकण्वे तमनपेक्ष्यैव सा शकुन्तला तपोवनदर्शनार्थमागताय दुष्मन्तायात्मानं रहसि समर्पितवतीति महाभारतादिपर्व्वकथा।

पुरा पुराणमुनिर्नारायणस्तपोविघातार्थमागतानामप्सरसां गर्व्वखर्व्वकरणायोर्व्वशीमद्वितीय सुन्दरीमुरुदेशादुत्पादयामास, ताञ्चैकदा दैत्यैरपह्रीयमाणां कृतार्त्तस्वरां पथि गच्छन् पुरूरवो नामा चन्द्रवंशीयनरपतिर्दैत्यहस्तादररक्ष, तदानीमेव सोर्व्वशी जितकन्दर्पं तं भूप-मन्यनिरपेक्षेव कामयते स्मेति हरिवंशीयकथा।

आसीत् पुरा प्रद्योतनामा नरपतिः, स च स्वीयकन्यां वासवदत्तां सञ्जयनाम्ने राज्ञे दातुमङ्गीकृतवान्। ततश्च सा वासवदत्ता वत्सराजमुदयनं स्वप्ने समालोक्य तत्रानुरक्ता गुरुजनमनपेक्ष्यैव दूतमुखेन तस्मै राज्ञे स्वाभिलाषं विज्ञापितवती। उदयनोऽपि तामपहृत-वानिति कथासरित्सागरकथा चानुसन्धेया ॥

---

অপ্সরা উর্ব্বশী পুরূরবাকে যে (অন্যমুখাপেক্ষিণী না হইয়াই) কামনা করিয়াছিল, ইহা পুরাণশাস্ত্রবিদ্‌গণ বলিয়া থাকেন, এবং বাসবদত্তা যে সঞ্জয়নামক রাজাকে দেওয়ার জন্য পিতা কর্ত্তৃক অঙ্গীকৃত হইয়াও উদয়নে আত্মসমর্পণ করিয়াছিলেন, তাহাও সাহসিকের কর্ম্ম, সুতরাং উপদেশের অযোগ্য।

काम। श्रूयतां, अस्ति विदर्भाधिपतेरमात्यः, समग्रधुर्य्यपुरुष-प्रकाण्डचक्रचूड़ामणिर्देवरातो नाम, यम् अशेषभुवनमहनीयपुण्य-महिमानम् आत्मनः सतीर्थ्यं पितैव ते जानाति योऽसौ यादृश-श्चेति (३०) अपि च—

व्यतिकरितदिगन्ताः श्वेतमानैर्यशोभिः,<br>
सुकृतविलसितानां स्थानमूर्ज्जस्वलानाम्।<br>
अकलितमहिमानः केतनं मङ्गलानाम्,<br>
क्वथमपि भुवनेऽस्मिन् तादृशाः सम्भवन्ति ॥ ३१ ॥

---

(३०) कामेति। धुरि कार्य्यभारे साधवो धुर्य्या मन्त्रिणः, समग्राणां समस्तानां धुर्य्यपुरुषाणां यत्प्रकाण्डचक्रं श्रेष्ठसमूहः तस्य चूड़ामणिः चूड़ामणिरिव सर्व्वश्रेष्ठ इत्यर्थः। अशेषभुवनैः सर्व्वभुवनवासिलोकैरित्यर्थः, महनीयौ पूजनीयौ पुण्यमहिमानौ यस्य तं आत्मनः स्वस्य सतीर्थ्यं सहाध्यायिनं (समानं तीर्थं उपाध्यायो यस्येति सतीर्थशब्दात् यत्प्रत्ययः) "सतीर्थ्यास्त्वेकगुरव" इत्यमरः। ते तव मात्रुत्या इत्यर्थः। सहाध्यायितया बहुकालमेकत्रावस्थानेन तव पितैवास्य वंशश्रुतस्वभावादीनि सर्व्वाणि जानातीति मत्कथनेनालमिति भावः।

(३१) तथापि यद्याग्रहः किञ्चित् श्रूयतामित्याह—व्यतिकरेति। श्वेतमानैः (श्विता वर्णे इति श्वितधातोरानशि रूपम्।) शुभ्रीभवद्भिः यशोभिः व्यतिकरः सम्बन्धः सञ्जात एषामिति व्यतिकरिताः तारकादित्वादितच्, दिगन्ता येषां ते व्यतिकरितदिगन्ताः यशोव्याप्तदिग्विभागा इत्यर्थः। ऊर्ज्जस्वलानां प्रबलानां सुकृतविलसितानां शुभादृष्टप्रकाशानां अथवा सुकृतानां पुण्यानां विलसितानां विलासमानानां स्थानमास्पदम्। तथा अकलितः अपरिच्छिन्नः महिमा प्रभावः येषां ते तथोक्ताः। एवं मङ्गलानां मङ्गलीनां केतनं निवासः। "केतनन्तु ध्वजे कार्य्ये निकेतनिवासयो"रिति विश्वः। तादृशाः देवतातुल्याः पुरुषाः अस्मिन् भुवने मर्त्यलोके

---

(৩০) কাম। শ্রবণ কর। সমস্ত প্রধান মন্ত্রিপুরুষসমূহের চূড়ামণিস্বরূপ দেবরাত নামে বিদর্ভাধিপতির এক অমাত্য আছে, ত্রিভুবনসমাদৃত পুণ্যপ্রভাব-শালী সেই দেবরাতকে তোমার পিতাই নিজের সহাধ্যায়িরূপে জানেন, তিনি যেরূপ লোক।

(৩১) আরও কোন। যাহাদের যশঃসমূহে দিগন্ত পরিব্যাপ্ত, যাহারা

माल । [ सहर्षं ] सहि! तं क्खु भअवदीगहिदणामधेअं सव्वदा तादो सुमरेदि । (ल)

लव । सहि! समं क्खु भअवदीए गुरुस आसादो विज्जाहिगमो किदोत्ति, तक्कालसंवेदिणो मन्तअन्ति । (व)

---

(ल) सखि! तं खलु भगवतीगृहीतनामधेयं सर्वदा तातः स्मरति ।

(व) सखि! समं खलु भगवत्या गुरुसकाशाद्विद्याधिगमः कृत इति तत्कालसंवेदिनो मन्त्रयन्ते ।

---

कथमिव कथञ्चित् ध्यानादिभिः कदाचिदिन्द्रैः सम्भवन्ति उत्पद्यन्ते । सर्गिप्रस्तादृशाः महापुरुषा मर्त्यलोके ध्यानादिभिर्योगिभ्रष्टाः कदाचित् सम्भवन्त्यपि विरला इति भावः । अत्र स्थानकेतनशब्दयोस्तादृशा इत्यस्य विशेषणत्वेऽपि 'वेदाः प्रमाण'मितिवत् विधेयप्राधान्यात् नपुंसकत्वमेकत्वञ्च बोध्यम् ।

अत्र देवरातस्य प्राधान्यसम्पादनरूपकार्यं प्रति बहूनां कारणानां प्रदर्शनात् समुच्चयोऽलङ्कारः । तल्लक्षणं यथा दर्पणे—"समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके । खले-कपोतिकान्यायात् तत्करः स्यात् परोऽपि चेत् । गुणक्रिये वा युगपत् स्यातां यद्वा गुणक्रिये" इति । मालिनी वृत्तम् ।

(ल) तमिति । भगवत्या कामन्दक्या गृहीतं उच्चारितं नामधेयं नाम यस्य तादृशं तं देवरातमित्यर्थः । मालत्या देवरातस्य भावि श्वशुरत्वं तस्मात् स्वगुरुनामग्रहणस्य च शास्त्राचारविरुद्धतया देवरातमित्यनुक्त्वा "भगवत्या गृहीतनामधेय"मित्येवंरीत्याभिहितमिति मन्तव्यम् ।

(व) सखीति । सममिति देवरातभूरिवसुभ्यामिति शेषः । तत्कालवेदिनः तत्समसामयिकाः मन्त्रयन्ते कथयन्ति । तथाच सातीर्थ्यादेतेषां परस्परं बाल्यमित्रत्वं, प्रणयः, करणञ्च सर्वमुपपन्नमिति भावः ।

---

প্রবল পুণ্য বিলাসের আশ্রয়স্বরূপ, যাঁহাদের প্রভাব অপরিচ্ছিন্ন ও যাঁহারা মঙ্গলের নিবাসস্বরূপ দেবরাতের ন্যায় তাদৃশ মহাপুরুষ এ জগতে অল্পই সম্ভূত হইয়া থাকে।

(ল) মাল। সখি! ভগবতী যাঁহার নাম করিলেন, সেই মহাপুরুষকে সর্বদাই আমার পিতা স্মরণ করেন।

(ব) লব। সখি! ভগবতীও তাঁহাদের সহিত গুরুসকাশে বিদ্যাভ্যাস করিয়াছিলেন, ইহা তৎসমকালবর্তী ব্যক্তিগণ বলিয়া থাকেন।

क्षिपन्निद्रामुद्रां मदनकलहच्छेदसुलभाम्
अवासोत्कण्ठानां विहगमिथुनानां प्रथमतः ।
दधानः सौधानामलघुषु निकुञ्जेषु घनताम्
असौ सन्ध्याशङ्खध्वनिरनिभृतः खे विचरति ॥ ३६ ॥

तदुत्तिष्ठामः * (३७) । [ इत्युत्तिष्ठति (३८) । ]

---

(३६) क्षिपन्निति । असौ श्रूयमाणः अनिभृतः अगुप्तः अतिविस्पष्ट इति यावत्, सन्ध्याशङ्खध्वनिः प्रतिदिननियमितः सन्ध्यासूचकः शङ्खशब्दः, अवासा सन्निहितविरहभावनया लब्धा उत्कण्ठा यैस्तेषाम् [illegible] विहगमिथुनानां चक्रवाकदम्पतीनां मदनकलहच्छेदेन सुरतावसानेन सुलभां अनायासप्राप्तां निद्रामुद्रां स्वापजनितमुद्रितावस्थां प्रथमतः आदौ क्षिपन् विरहहेतुभूतरात्र्युपस्थितिज्ञापनेनापसारयन् । ततः अलघुषु विशालेषु सौधानां प्रासादानां निकुञ्जेषु मध्यदेशेषु घनतां गाढतां प्रतिध्वनिना बहुलतामित्यर्थः, दधानः धारयन् खे आकाशे विचरति प्रसरति । तदाव सन्ध्या समागतेति नाव विलम्बः कर्त्तव्य इति भावः ।

अत्र चक्रवाकमिथुनानामिति विशेषे वक्तव्ये विहगमिथुनानामिति सामान्यप्रयोगात् विवक्षितविशेषास्फुटत्वदोषः । निकुञ्जशब्दस्य लतामण्डपवाचित्वेऽपि सौधमध्यभागस्य निकुञ्जत्व-लक्षणाय मध्यभागत्वादधिकनिकुञ्जशब्दप्रयोगान्न नेयार्थत्वदोषं, अन्यथा न्यादधिकपदत्वलाभ एव तद्दोषप्रसङ्गात् ।

एकस्य शङ्खध्वनेः क्रमेण चक्रवाककर्णसौधमध्यभागगगनेषु विचरणात् पर्यायालङ्कारः । तल्लक्षणं यथा दर्पणे—"क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात् । भवति क्रियते वा चेत्तदा पर्याय इष्यते ॥" शिखरिणी वृत्तम् ॥

(३७) तत् तस्मात् कालक्षेपादित्यर्थः ।

(३८) अवलोकितया सह कामन्दकीति शेषः ।

---

(৩৬) প্রত্যাকাল নির্দ্দিষ্ট শঙ্খের ধ্বনি দিতেছে এই শঙ্খধ্বনি প্রথমতঃ [illegible] সন্ধ্যায় উৎকণ্ঠিত চক্রবাকমিথুনের সুরতাবসানজনিত নিদ্রাবস্থাকে অপসারিত করিয়া [illegible] সৌধমধ্যভাগে গাঢ়তালাভ করতঃ আকাশে বিচরণ করিতেছে।

(৩৭-৩৮) তবে আমরা উঠি, (এই কথা বলিয়া অবলোকিতার সহিত কামন্দকী উঠিলেন)।

---

* [illegible]

माल। [ अपवार्य्य। ] कधं उवहारीकिदह्मि राइणो तादेण, राआराहणं क्खु तादस्स गुरुअं ण उण मालदी। [ सास्रं। ] हा ताद! तुमम्पि णाम मम एव्वं त्ति सव्वधा जिदं भोअतिह्णाए। [ सानन्दं। ] कधं महाकुलप्पभवो वि सो महाणुभाओ, सुभणिदं पिअसहीए कुदो वा महोदहिं वज्जिअ पारिजादस्स उग्गमोत्ति। अवि णाम तं पुणोवि पेक्खिस्सं (छ)

लव। अवलोइदे! इदो एहि, एदिणा सोवाणेण[1] ओदरह्म (च)।

---

( छ ) कथमुपहारीकृतास्मि राज्ञा तातेन, राजाराधनं खलु तातस्य गुरुकं, न पुनर्मालती। हा तात! त्वमपि नाम ममैवमिति, सर्वथा जितं भोगतृष्णया। कथं महाकुलप्रभवोऽपि स महानुभावः, सुभणितं प्रियसख्या, "कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गम" इति। अपि नाम पुनरपि तं प्रेक्षिष्ये।

( च ) अवलोकिते! इत एहि एतेन सोपानेनावतराव:।

---

(छ) अपवार्य्य वलितग्रीवं परावृत्य निभृतमिति यावत्। "निगूढ़भावसंयुक्तमपवारितकं भवे"दिति भरतः। पूर्वोक्तमपि दुःखेन पुनः कथयति—कथमित्यादि। महाकुलप्रभवोऽपि प्रसिद्धवंशसम्भूतोऽपि न केवलमसामान्यरूपलावण्यपाण्डित्यादिसम्पन्न इत्यपेरर्थः। स माधवः, महानुभावः महाप्रभावः। अपि प्रश्ने, नाम सम्भावनायां, तं माधवं पुनरपि प्रेक्षिष्य इति इतः परमेकवारदर्शनेऽपि जीवनं सार्थकं भवेदिति भावः।

(च) लवेति। इत अस्यां दिशि एहि आगच्छ। अत्र केवलावलोकितया आत्मनातया समं लवङ्गिकायाः किञ्चिद्गुप्तमन्त्रणमस्तीति सूचितम्।

---

(छ) মাল। ( গ্রীবা ফিরাইয়া নিভৃতে ) কেন রাজোদ্দেশে পিতা আমাকে উপহার দিলেন? রাজার তুষ্টিসাধনই পিতার গুরুতর হইল, মালতী নহে! ( অশ্রু বিসর্জন করিয়া ) হা তাত! তুমিও আমার প্রতি এরূপ দারুণ হইলে? সুতরাং ভোগতৃষ্ণাই সর্ব্বথা জয় লাভ করিল। ( আনন্দের সহিত ) কেন মহাকুলপ্রসূত হইয়াও তিনি মহাপ্রভাবশালী, অতএব প্রিয়সখী ভালই বলিয়াছে, "মহোদধি ভিন্ন কোথা হইতে পারিজাতকুসুমের উৎপত্তি হয়"? এ দিকে এস, এই সোপানদ্বারা অবতরণ করি।

---

[1] "संमार्जनेने"ति क्वचित् पाठः, संमार्जनेन [illegible] तदर्थः। "संमार्जनमिदं। [illegible]

काम [ अपवार्य्य। ] साधु, सम्प्रति मया तटस्थयैव, मालतीं प्रति निसृष्टार्थदूतीकृत्यस्य लघूकृतो भारः। तथाहि ( ३९ )

वरेऽन्यस्मिन् द्वेषः, पितरि विचिकित्सा च जनिता,
पुरावृत्तोद्गारैरपि च कथिता कार्य्यपदवी।
स्तुतं तन्माहात्म्यं, यदभिजनतो यच्च गुणतः
प्रसङ्गात् वत्सस्येत्यथ खलु विधेयः * परिचयः॥ ( ४० )

---

( ३९ ) कामेति। तटस्थयैव उदासीनयैव, न तु कृतमाधवपक्षपातयैवेत्यर्थः। निसृष्टार्थदूतीकृत्यस्य "निसृष्टार्थदूतीकल्पमवलम्बितव्य" इति पूर्व्वप्रतिज्ञाततादृशदूतीकार्य्यस्य, भारः कर्त्तव्यत्वेन गुरुत्वं लघूकृतः कर्त्तव्यस्य प्रायः साधिततया स्वल्पीकृतः। निसृष्टार्थदूतीलक्षणन्तु इदमेवोक्तं पूर्व्वमेव प्रदर्शितं। भरतोक्तं तल्लक्षणं यथा—"स्त्रीपुंसयोरागयत्नाद्धाना स्वयञ्च कार्य्यं प्रतिपादयन्ती। इष्टार्थिका या परदार्थयोगे दूती नियोज्या बहुधा सुधीभि"-रिति। मालतीं प्रतीत्यनेन मदयन्तिकां प्रति न लघूकृत इति सूचितम्। कृतांशं वक्ष्यमाणाभि-धातुं कर्त्तव्यांशञ्च दर्शयितुमाह—तथाहीति।

( ४० ) प्रथमं कृतांशं दर्शयति—वर इति। अन्यस्मिन् वरे नन्दने द्वेषः कुत्सितदोष-कथनेन मालत्या वैरस्यं जनितः उत्पादितः ( जनितेत्यस्येव लिङ्गविपरिणामेनान्वयः )। पितरि जनके भूरिवसौ विचिकित्सा [illegible] [illegible] [illegible] नन्दनाय मालतीं [illegible] कन्यां [illegible] वा राजसन्तोषमनपेक्ष्य माधवाय [illegible] जनिता मत्कीर्त्तनवाक्योपन्यासेन मया उत्पादिता। यद्वा च पितरि वैगुण्यं [illegible]। तथा पुरावृत्तानां शकुन्तलादिवृत्तान्तानामुद्गारैः कथनैः कार्य्यपदवी कर्त्तव्यपद्धतिः [illegible] [illegible] [illegible] सम्पादितेति यावत्, कथिता वर्णिता मयेति शेषः। एवं वत्सस्य माधवस्य अभिजनतः सद्वंशतः यन्माहात्म्यं तथा गुणतः [illegible]

---

(৩৯) কাম। সম্প্রতি উদাসীন থাকিয়াই আমি মালতীর প্রতি নিসৃষ্টার্থ-দূতীকার্য্যের ভার অনেকাংশে লঘু করিয়াছি। যেহেতু—

(৪০) অন্য বরে নন্দনে দ্বেষ ও পিতৃবিষয়ে সন্দেহ উৎপাদিত করিয়াছি, পুরাবৃত্তোদ্গারের দ্বারা কার্য্যপ্রণালী বলিয়াছি! এবং প্রসঙ্গতঃ বৎসের

---

* "[illegible]" ইতি [illegible] পাঠঃ, [illegible] ইতি [illegible]।

[ इति निष्क्रान्ताः सर्वे: । ( ४१ )

इति मालतीमाधवे द्वितीयोऽङ्कः । ( ४२ )

---

यन्माहात्म्यं महाभाग्यं वर्त्तत इति शेषः। तदपि प्रसङ्गात् लवङ्गिकाजिज्ञासाप्रसङ्गेन स्तुत प्रशंसितम्। प्रसङ्गं विनाभिधाने माधवपक्षपातित्वाशङ्कया विश्वासयोग्यं न स्यादिति भावः

एतेन वात्स्यायनकामशास्त्रानुसारित्वं दूतीकृत्यस्य प्रतिपादितम्। तथाहि वात्स्यायनकाम शास्त्रे—कन्यासंप्रयुक्तकाधिकरणे निसृष्टार्थदूतीकृत्यनिरूपणप्रकरणे सूत्राणि—"अन्यवरपितृणाञ्च दोषानभिप्रायविरुद्धान् प्रतिपादयेत्।" मातापित्रोश्च गुणानभिज्ञतामनपेक्षतां लुब्धतां शठतां चपलतां बान्धवानां"। "याश्चान्या अपि समानजातीयाः कन्याः शकुन्तलाद्याः स्वरुच्या भर्त्तारं प्राप्य मोदन्ते स्म ताश्चास्याः प्रदर्शयेत्।" तस्याः स्वरुच्या नायकगुणान् भूयिष्ठान् परिवर्णयेदिति।

कृतागमभिधायावशिष्टं कथयति—अथेति। अथ अनन्तरं परिचयः समागमसाधनेनोभयोः परस्परविशेषविज्ञानं विधेयः कर्त्तव्यः अस्माभिरिति शेषः।

अनेन प्रकृतसमागमोद्यमकथनात् करणं नाम मुखसन्धेरङ्गम्। तल्लक्षणं यथा दर्पणे—"...करणं पुनः। प्रकृतार्थसमारम्भ" इति। अङ्कावतारोऽपि सूचितः।

अत्र भारलघुकरणरूपकार्य्यं प्रति अन्यवरदोषोपन्यासादिबहुतरकारणोपन्यासात् समुच्चयालङ्कारः। शिखरिणी वृत्तम्॥

( ४१ ) जना इति शेषः, तथाच—पुंस्त्वं बहुत्वञ्च न विरुद्धम्। तथा लिखनकारणन्तु पूर्वमेवोक्तम्।

( ४२ ) क्वचित् पुस्तके "धवलगृहो नाम" इत्यधिकः पाठः। तथात्वे धवलगृहोपलक्षितत्वात्तथानाम कृतमित्यनुसन्धेयम्।

इति काव्यतर्कतीर्थोपनामक-श्रीकृष्णविहारितर्कसिद्धान्तभट्टाचार्य्यकृतायां तत्त्वबोधिनीसमाख्यायां मालतीमाधवव्याख्यायां द्वितीयाङ्कविवृतिः समाप्ता।

---

বংশতঃ ও গুণতঃ মাহাত্ম্যের প্রশংসা করিয়াছি, অনন্তর সমাগমদ্বারা উভয়ের পরস্পর পরিচয় করিয়া দেওয়া বাকি রহিয়াছে। ( সকলে নিষ্ক্রান্ত হইল )

মালতীমাধবের দ্বিতীয়াঙ্ক সমাপ্ত।

# तृतीयोऽङ्कः।

[ ततः प्रविशति बुद्धरक्षिता। ] ( १ )

बुद्ध। [ परिक्रम्याकाशे। ] अवलोइदे! अवि जाणासि कहिं भअवदीत्ति? ( क )

[ प्रविश्य अवलोकिता ] बुद्धरक्खिदे! किं पमुद्धासि? कोवि अकालो भअवदीए पिण्डवादवेलं वज्जिअ मालदीं अणुवत्त-माणाए (ख)।

---

( क ) अवलोकिते! अपि नाम जानासि क्व भगवतीति?

( ख ) बुद्धरक्षिते! किं प्रमुग्धासि? कोऽपि अकालो भगवत्याः पिण्डपातवेलां वर्जयित्वा मालतीमनुवर्तमानायाः।

---

( १ ) सम्प्रति कविरङ्कान्तरावतारार्थं प्रवेशकं प्रस्तौति—तत इत्यादिना। "नियुक्तैव मया बुद्धरक्षिते"ति प्रथमाङ्कवाक्येन बुद्धरक्षितायाः प्रवेशः स्पष्टं सूचितः।

( क ) बुद्धेति। परिक्रम्य पादविक्षेपं कृत्वा। आकाशे शून्ये अप्रविष्टामवलोकितां सम्बोध्येत्यर्थः, कथयतीति शेषः "अप्रविष्टैः सहालापो भवेदाकाशभाषित" मिति त्रिपुरारि-कृतमाकाशभाषितलक्षणम्।

"तदास्तां किञ्चिदाख्यातुकामाये"त्यादिना "यदि तद्विषयोऽनुरागबन्ध" इत्यन्तेन लवङ्गिकया कामन्दक्या च मालतीमाधवयोर्मदनविकारस्य वर्णनात् तयोः परस्परसमागमोपाय-भूतानुरागस्य लक्ष्यतया नन्दनविवाहनिषेधेनालक्ष्यतया च इतः प्रभृति चतुर्थाङ्कसमाप्तिं यावत् "प्रतिमुखसन्धिः"। तल्लक्षणं यथा दर्पणे—

"फलप्रधानोपायस्य मुखसन्धिनिवेशिनः।
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तदिति॥"

( ख ) प्रविश्येति। प्रमुग्धासि मोहं प्राप्तवत्यसि, कुतोऽन्यथा विशेषतः परिज्ञातविषये

---

বুদ্ধরক্ষিতার প্রবেশ।

( ক ) বুদ্ধ। ( পরিক্রমণ করতঃ অপ্রবিষ্ট অবলোকিতার প্রতি ) অব-লোকিতে! তুমি জান কি, ভগবতী কোথায় ( আছেন )?

( খ ) অবলোকিতা। ( প্রবেশ করিয়া ) বুদ্ধরক্ষিতে! তুমি কি মোহ

बुद्ध। हुं, तुमं उण कहिं पत्थिदासि ? (ग)

अव। अहं क्खु भअवदीए माहवसआसं अणुप्पेसिदा, सन्दिट्टं अ तस्स, जधा सङ्करघरसम्बद्धं कुसुमाअरं णाम उज्जाणं गदुअ कुज्जअणिउञ्ज-पेरन्त रत्तासोअ-गहणे चिट्ठत्ति, गदो अ तत्थ माहवो (घ)।

---

(ग) हुं, त्वं पुन: कुत्र प्रस्थितासि ?

(घ) अहं खलु भगवत्या माधवसकाशमनुप्रेषिता, सन्दिष्टश्च तस्य, यथा शङ्करगृहसम्बद्धं कुसुमाकरं नामोद्यानं गत्वा, कुब्जकनिकुञ्जपर्य्यन्तरक्ताशोकगहने तिष्ठ इति, गतश्च तत्र माधव:।

---

प्रश्न: सम्भवेदिति भाव:। ज्ञातमपि यदि श्रोतुमायहस्तदा कथयामीत्यभिप्रायेणाह—कोऽपि चेति। पिण्डपातवेलां निर्द्दिष्टभोजनकालं वर्जयित्वा परित्यज्य मालतीं अनुवर्त्तमानाया: मालतीमनुसरन्त्या: कोऽपि च अनिर्वचनीय: काल: समय: भोजनकालातिरिक्त: सर्व एव कालइत्यर्थ:, गच्छतीति शेष:। भोजनसमयातिरिक्ते सर्वस्मिन्नेव समये भगवती मालती-समीप एव वर्त्तत इति सम्प्रत्यपि तत्रैवेत्यर्थ:।

(ग) हुह्विति। हुमित्यनुमतौ। "हुं वितर्के परिप्रश्ने" इति त्रिकाण्डशेष:।

(घ) अवेति। तस्य माधवस्य, शङ्करगृहसम्बद्धं शिवालयसंलग्नम्। कुब्जक: "कुजा" इति ख्यातो वृक्षविशेष: तस्य यो निकुञ्ज: तद्वासस्थानं तस्य पर्य्यन्ते प्रान्तभागे यत् रक्ताशोक-गहनं रक्ताशोकानां वनं तत्र। कुब्जकप्रान्तत्वादिना—तत्स्थानस्य दु:सञ्चारत्वाद्विजनत्वं सूचितमिति मन्तव्यम्।

---

প্রাপ্ত হইয়াছ ? নির্দ্দিষ্ট ভোজনকাল ভিন্ন এই সুদীর্ঘ কাল (ভগবতীর) মালতীর অনুবর্ত্তনে অতিবাহিত হইতেছে।

(গ) বুদ্ধ। তাই, তুমি তবে কোথায় গিয়াছিলে ?

(ঘ) অব। ভগবতী আমাকে মাধবের নিকট পাঠাইয়াছিলেন এবং তাঁহার সম্বন্ধে আদেশ করিয়াছিলেন যে, "শিবালয়সংলগ্ন কুসুমাকরনামক উদ্যানে যাইয়া কুব্জকবৃক্ষপরিব্যাপ্ত কুঞ্জের প্রান্তভাগে রক্তাশোকবনে অবস্থান কর।" মাধবও তথায় গিয়াছে।

बुद्ध। किंत्ति तहिं माहवो अणुप्पेसिदो? (ङ)

अव। अज्ज कसणचउद्दसीत्ति, भअवदीए समं मालदी सङ्करघरं गमिस्सदि, तदो किल एव्वं सोहग्गं वड्ढदित्ति देवदाराहणणिमित्तं सहत्थकुसुमावचअं उद्दिसिअ, लवङ्गिआदुदीअं मालदीं, भअवदी जेव्व कुसुमाअरुज्जाणं आणइस्सदि, तदो अण्णोण्णदंसणं भविस्सदित्ति। तुमं उण कहिं पत्थिदा? (च)।

---

(ङ) किमिति तत्र माधवोऽनुप्रेषित?

(च) अद्य कृष्णचतुर्दशीति, भगवत्या समं मालती शङ्करगेहं गमिष्यति, ततः किल एवं सौभाग्यं वर्द्धत इति, देवताराधननिमित्तं स्वहस्तकुसुमावचयमुद्दिश्य लवङ्गिकाद्वितीयां मालतीं भगवत्येव कुसुमाकरोद्यानमानेष्यतीति, ततोऽन्योन्यदर्शनं भविष्यतीति। त्वं पुनः क्व प्रस्थिता?

---

(ङ) बुद्धेति। किमिति किमर्थं केन हेतुनेति यावत्। तत्र कुसुमाकरोद्याने।

(च) अवेति। इति हेतोः (कृष्णचतुर्दश्यां शिवार्चनस्य प्रशस्तत्वात् शङ्करगेहगमन-हेतुतया तदुपन्यासो युक्त इति मन्तव्यम्।) भगवत्या कामन्दक्या। ततः शङ्करगेहगमनानन्तरं। किलेत्यलीके सौभाग्यवृद्धिकथनस्य मिथ्यात्वात्। एवं—स्वहस्तरचितकुसुमैरर्चने कृते। इति एवं बोधयित्वेति शेषः। देवतानां आराधनं निमित्तं हेतुर्यस्य तादृशं स्वहस्तेन कुसुमानां पुष्पाणां अवचयं उत्तोलनं उद्दिश्य निमित्तीकृत्य, लवङ्गिकाद्वितीयां लवङ्गिका-मात्रानुयायिकां। अन्योन्यदर्शनं मालतीमाधवयोः परस्परनिर्जनसाक्षात्कारः भविष्यति इति हेतोः माधवस्तत्रानुप्रेषित इत्यर्थः। मालतीमाधवयोरतर्कितविजनदर्शनेन परस्परानुरागः सुतरां वर्द्धतामिति भगवत्या आशय.।

---

(ঙ) বুদ্ধ। কি জন্য মাধব সে স্থানে প্রেরিত হইয়াছে?

(চ) অব। অদ্য কৃষ্ণচতুর্দ্দশী (সুতরাং) ভগবতীর সহিত মালতী শঙ্কর-গৃহে গমন করিবে। পরে ভগবতীই স্বহস্তোত্তোলিত কুসুমে দেবতার্চ্চন করিলে সৌভাগ্য বৃদ্ধি পায় (ইহা মালতীকে বুঝাইয়া) দেবতার্চ্চনের নিমিত্ত স্বহস্তে কুসুমচয়নের উদ্দেশ করিয়া মাত্র লবঙ্গিকার সহিত মালতীকে কুসুমাকরোদ্যানে আনয়ন করিবেন। পরে মালতী ও মাধবের পরস্পরসন্দর্শন ঘটিবে। তুমি আবার কোথায় যাইতেছ?

अव। साहु बुद्धरक्खिदे! साहु। (ञ)

बुद्ध। एहि गच्छह्म। (ट) [ इति परिक्रम्य निष्क्रान्तः ]

प्रवेशकः। (२)

[ ततः प्रविशति कामन्दकी। ] (३)

---

(ञ) साधु बुद्धरक्षिते! साधु।

(ट) एहि गच्छावः।

---

आरोपितः हृदि भावितः। अस्या मदयन्तिकाया "अपि नाम किं तं मकरन्दं प्रेक्षे साक्षात्-पश्यामि" एष मनोरथः अभिलाषः अभूदिति शेषः। मदापादितानुरागेव मदयन्तिका सम्यगेवमभिभूता यत् सर्वदैव साक्षान्मकरन्ददर्शनाकाङ्क्षतीति। इत्यस्मिन् ज्ञात इति भावः।

(ञ) अवेहि: साधु सम्पादितमिति शेषः। अनेन त्वया भगवत्याः कार्यभारो लघू-कृत इति भावः।

(२) द्वितीयाङ्कप्रवेशकव्याख्यायामेव प्रवेशकलक्षणमभिहितम्। अयञ्च प्रवेशकः इतश्च कुसुमाकरोद्याने माधवगमनस्य कामन्दकीनिर्देशेन मकरन्दे मदयन्तिकाया जातानुरागोत्पादनस्य वर्णिष्यमाणस्य च मालत्यादीनां शङ्करगृहगमनादेर्निर्दर्शक इत्यनुसन्धेयम्।

(३) कामन्दक्याः प्रवेशः अवलोकितया सूचितः।

---

এইরূপ লাবণ্যসম্পন্ন, তাদৃশ পাণ্ডিত্য শৌর্য্যোদার্য্যশালী এইরূপ উচ্চবংশজাত বলিয়া মকরন্দের উপর প্রিয়সখীর এতাদৃশ অনুরাগ বৃদ্ধি পাইয়াছিল যে, যদ্দ্বারা তাহার (মদয়ন্তিকার) এইরূপ মনোভিলাষ জন্মিয়াছে যে, তাঁহাকে (মকরন্দকে) সাক্ষাৎ নিরীক্ষণ করিব ?"

(ঞ) অব। বুদ্ধরক্ষিতে! তুমি বেশ (সম্পাদন করিয়াছ)

(ট) বুদ্ধ। এস আমরা যাই।

(বুদ্ধরক্ষিতা ও অবলোকিতা নিষ্ক্রান্ত হইল)

কামন্দকীর প্রবেশ।

इदञ्च साधीयस्तत्र सम्प्रत्याशानिबन्धनम्। (६)
शाकुन्तलादीनितिहासवादान् प्रस्तावितानन्यपरैर्वचोभिः।
श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी चिराय, चिन्तास्तिमितत्वमेति॥ (७)

---

निर्जने नन्मात् द्वितीये स्थाने इत्यर्थः, रमते नर्मालापैर्मया सह क्रीड़ति। प्रीत्या प्रणयेन वाचं ददाति न कदाचिदपि परुषं भाषत इत्यर्थः। (वाचमित्यत्र "दायं देय"मिति च पाठान्तरं दृश्यते, तत्र दायं यौतुकमनुत्तरं देयमिति वा "दाये दाने च दायः स्याद्दायः यौतुकमात्रके" इति मेदिनी। देयं उपहारयोग्यं कर्पूरादिकं वस्त्वित्यर्थः।) तथा अनुवर्त्तते प्रियसम्भाषणा-भ्युत्थानासनदानादिभिरुपचरति, यद्वा गमनसमये अनुवर्त्तते मामनुगच्छतीत्यर्थः। एवं गमन-समये तत्समीपान्मत्तं प्रति गमनावसरे कण्ठे लग्ना मदीयां मन्यां बाहुपाशाभ्यां निरुध्य निरुध्य बहुशो मम गमनप्रतिरोधं जनयित्वा प्रणम्य पादवन्दनं कृत्वा च शपथैः यदि नेदानीमागच्छसि तदा गुरुहत्यापापेन लिप्यसे, अथवा मम मस्तकं खादसीत्याद्यनतिक्रमणीयशपथवाक्यैः तत्पदि तत्पदयोरिव प्रत्यासक्तिं मम प्रत्यागमनं याचते प्रार्थयति। तत्रैव मालतीति शेषः।

अत्र रमते प्रमोदते इत्याद्यनेकासु क्रियासु मालतीरूपमेकं कर्तृकारकमिति दीपकालङ्कारः, यद्यप्यत्र सखीनुत्क्षिप्य व्यवहार-प्रतिपादनरूपकार्य्यं प्रति विरहे औचित्यमानादिरूपकारणाना-मुपन्यासात् समुच्चयालङ्कारः, इत्यनयोः सङ्करः। हरिणी वृत्तम्

(६) इदमिति। तत्र इदानीं तत्र मालतीमाधवयोः समागमसाधने इदं वक्ष्यमाणमत्र साधीयः दृढतरं आशायाः नियतमिदं मदङ्कनावस्थितत्वेनरूपायाः प्रत्याशायाः निबन्धनं हेतुः।

(७) किन्तदाशानिबन्धनमित्याह—शाकुन्तलादीनिति। अन्यपरैः—मालत्युपदेशाभिप्रायात्-परैः वस्तुतो मालत्युपदेशाय प्रयुक्तैरपि अन्योद्देशेन प्रयुक्तवदवभासमानैरित्यर्थः, वचोभिर्वाक्यैः प्रस्तावितान् मया मदिङ्गितज्ञेन सखीजनेन वा उत्थापितान् शाकुन्तलादीन् शकुन्तलादुष्मन्त-

---

প্রণয়চিত্তা হয়। নির্জনে নর্মালাপদ্বারা আমার সহিত ক্রীড়া করে, সর্বদা প্রিয় কথা বলে ও সম্ভাষণাদিদ্বারা আনুগত্য স্বীকার করে। এবং গমনসময়ে আমার কণ্ঠলগ্না হইয়া বারবার আমাকে নিরুদ্ধ করিয়া ও প্রণাম করিয়া নানা-বিধ শপথদ্বারা তৎক্ষণাৎ আমার প্রত্যাগমন ভিক্ষা করে।

(৬) অনন্তর যাহা বলিতেছি তাহাও মালতীমাধবের সমাগমসাধনে সম্প্রতি দৃঢ়তর প্রত্যাশার কারণ।

৭। অন্য কোনও প্রসঙ্গক্রমে প্রস্তাবিত শকুন্তলাদির ইতিহাসকথা শ্রবণ

तदद्य माधवसमक्षमुत्तरमुपक्रमिष्ये । (८)

[ नेपथ्याभिमुखमवलोक्य । ] वत्से ! इत इतः । (९)

[ ततः प्रविशति मालती लवङ्गिका च । ]

माल । [ स्वगतम् । ] "कधं उवहारीकिदम्हि" इत्यादि पूर्वोक्तं पठति । (१०)

---

सुखान् इतिहाससंवादान् पुरावृत्तानि श्रुत्वा सावधानं समाकर्ण्य मदुत्सङ्गे समाङ्के निवेशिताङ्गी शरीरस्य मदायत्ततां निवेदयन्तीव पातितविग्रहा चिराय बहुकालं यावत् चिन्तया "शकुन्तलादिवत् स्वाधीनाचरणं मया कर्त्तव्यं न वा ? केनोपायेन वा कर्त्तव्यमित्यादिभावनया शिथिलत्वं निश्चलत्वं प्रति लभते। इत्येतदेव माधवेऽस्य समप्रत्याशानिबन्धनमिति भावः। ( अत्र "प्रस्तावयत्यन्यपरैर्वचोभि"रिति पाठान्तरं, तत्र अन्यपरैः अन्यप्रसङ्गेन उदितैर्वचोभिः मालत्येव शकुन्तलादीनितिहाससंवादान् प्रस्तावयति शकुन्तलादिभिः पित्रादिनिरपेक्षयैवात्मा दत्त इति यत् श्रूयते तत् किं सत्यं इति मां पृच्छतीत्यर्थः। ततः श्रुत्वा शकुन्तलादिवृत्तं सत्यमेवेति मत्तः समाकर्ण्य इति विशेषः। अन्यत् समानम्। अत्रेन्द्रवज्रोपेन्द्रवज्रयोः सङ्कररूपा उपजातिः छन्दः। छन्दोमञ्जर्यामुक्तं तल्लक्षणं यथा—"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः। इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम॥")

(८) तदद्येति। तत्तस्मात् मालत्यवश्यं मदुक्तमाचरिष्यतीति पूर्वोक्तहेतुभिरवधारणादित्यर्थः। माधवस्य समक्षं प्रत्यक्षं समीप एवेति यावत्, उत्तरं अनन्तरकर्त्तव्यं उपक्रमिष्ये आरप्स्ये। 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदम्।

(९) नेपथ्याभिमुखमवलोक्य नेपथ्याभिमुखावलोकनेन मालतीं दृष्ट्वेत्यर्थः। वत्से इति मालत्याः सम्बोधनम्। इत इत इति आगच्छेति शेषः।

(१०) मालेति। इत्यादि पठितम् (पूर्वोक्तं पठितम्" इत्यन्तं सर्वं सन्दर्भमित्यर्थः।

[illegible] মালতী তাহার শরীর আমার ক্রোড়ে সন্নিবেশিত করতঃ বহুকাল চিন্তা [illegible] লাভ করে।

৮। সুতরাং মাধবের সমক্ষেই আজ ইহার পর যাহা কর্ত্তব্য, তাহার অনুষ্ঠান করিব।

৯। (নেপথ্যের দিকে অবলোকন করিয়া) বৎসে! মালতি এদিকে এস।

(মালতী ও লবঙ্গিকার প্রবেশ)।

১০। মাল। (স্বগত) "কধং উবহারীকিদম্হি" ইত্যাদি পূর্ব্বোক্ত পাঠ [illegible]।

लव। सहि! एसो क्खु महुर-मह-रसाद्द-मञ्जरी कवलण-केलि--कल--कोइल--उल--कोलाहलाकुलिद--सहआर- सिहरुड्डीण-चडुल-चञ्चरीअणिअर-व्वदिअरुद्दलिद-दल--कराल-चम्प -आहिवास-मणोहरो, मराल-मंसल-जहण-परिणाहुव्वहणमन्थरोरुभर-विसंठुल-खलिद-चलण-संचलणोण्णीद -सेअसीअर--सुहाविंदुज्जल- मुह-मुह-चन्दणाअमाण-सीअलप्फरसो, तुमं परिस्सअदि कुसुमाअरुज्जाण-मारुदो, ता पविसह्म (ठ) [ इति परिक्रम्य प्रविशतः। ]

---

(ठ) सखि! एष खलु मधुरमधुरसार्द्रमञ्जरीकवलनकेलिकलकोकिलकुलकोलाहला-कुलितसहकारशिखरोड्डीनचटुलचञ्चरीकनिकरव्यतिकरोद्दलितदलकरालचम्पकाधिवासमनो-हरो, मरालमांसलजघनपरिणाहोद्वहनमन्थरोरुभरविसंष्ठुलस्खलितचरणसंचलनोन्नीतस्वेद-शीकरसुधाबिन्दूज्ज्वलमुखमुखचन्द्रचन्दनायमानशीतलस्पर्शः त्वां परिष्वजति कुसुमाकरोद्यान-मारुतः, तत् प्रविशावः

---

क्वचित् पुस्तके "कथं उवहारीकिदह्मि" इत्यादि। "अविनाम तं पुरोवि पेक्खिह्म" इत्यन्तः सर्व्व एव सन्दर्भः पुनर्लिखितो दृश्यते। व्याख्या तु पूर्व्वमेव प्रदर्शिता।

(ठ) लवेति। सखि! एष कुसुमाकरोद्यानमारुतः त्वां परिष्वजति आलिङ्गतीत्यन्वयः। तत्र कुसुमाकरोद्यानमारुतं विशिनष्टि—मधुरेत्यादिः। [illegible] मधुरेण सुस्वादुना मधुरसेन पुष्पनिर्यासद्रवेण आर्द्राणां सिक्तानां मञ्जरीणां चूतवल्लरीणां कवलने ग्रासने या केलिः क्रीडा तया कलेन मधुरास्फुटेन कोकिलकुलस्य पिकसमूहस्य कोला-हलेन कलकलेन आकुलितात् व्याप्तात् सहकारशिखरात् अतिसुरभिचूततरुशाखात् "सहकारोऽति-सौरभ" इत्यमरः उड्डीनस्य [illegible] चटुलस्य चञ्चलस्य चञ्चरीकनिकरस्य भ्रमर-समूहस्य "चञ्चरीकोऽलिर्दिरेफो" [illegible] व्यतिकरेण सम्पर्केण [illegible] यावत्। उद्दलितदलानि विकसितपत्राणि, अत एव करालानि दन्तुराणि "करालो दन्तुरे तुङ्गे"

---

(ঠ) লব। সখি! মধুর [illegible] [illegible]
[illegible]

[ दृष्ट्वा । ] अये ! लवङ्गिकाद्वितीया मालत्यपि । (१४)

आश्चर्यमुत्पलदृशो वदनामलेन्दु-
सान्निध्यतो मम मुहुर्जड़िमानमेत्य ।
जात्येन चन्द्रमणिनेव महीधरस्य
सन्धार्य्यते द्रवमयो मनसा विकारः ॥ (१५)

---

मालत्याः प्रथमं आविर्भवन्ती इयं कामन्दकी सन्तापदग्धस्य कामानलतापतप्तस्य मम अन्तःकरणं मनः सोच्छ्वासं प्रियागमनसूचकतया सजीवं करोति।

यथा वृष्टेः प्रथमं आविर्भवन्ती विद्युद् वृष्टेः सूचकतया ग्रीष्मोत्तापतप्तस्य मयूरयूनो मनः समुच्छ्वसितं करोति, तथैव प्रियायाः प्रथममाविर्भवन्तीयं कामन्दकी प्रियागमनसूचकतया तद्विरहानलतापतप्तस्य मम मनः समुच्छ्वसितं करोतीति भावार्थः।

अत्र पूर्वार्द्धोपादानमनुष्टानार्थं तद्दोषप्रशमनाय। अचिरप्रतिबिम्बनादलङ्कारः, तेन च ग्रीष्मोत्तापतप्तस्य शिखण्डियून इव कामानलसन्तप्तस्य ममेत्युपमानापि व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः। इन्द्रवज्रा वृत्तम्। द्वितीयाङ्कगतेन नन्दनाय मालतीदानप्रस्तावेन प्रकृतकार्य्यार्थविच्छेदे प्राप्ते अत्र पुनर्मालत्या मालतीदर्शनसम्भावनं तस्य बीजस्य हेतुरिति बिन्दुनामाङ्गकृतिः। तल्लक्षणं यथा दर्पणे—"अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारण"मिति॥

(१४) (दृष्ट्वा लवङ्गिकया सह मालतीमवलोक्य) अये इत्यानन्दजनितसम्भ्रमे। न केवलं कामन्दकी लवङ्गिकाद्वितीया मालत्यपि वर्तत इत्यर्थः। तस्मादितःपरं किमानन्दकारणमिति भावः।

(१५) आश्चर्यमिति। उत्पलदृशः इन्दीवरलोचनायाः मालत्याः वदनं अमलेन्दुः निर्मलचन्द्र इव अतएव वदनमेवामलेन्दुः, तस्य सान्निध्यतः सामीप्याद्धेतोः, जाड्यं स्तब्धभावः तेन अभिमानवता इत्यर्थः, मम मनसा जात्येन उत्कृष्टेन महीधरस्य पर्वतस्य चन्द्रमणिना

---

মন উচ্ছ্বসিত করে, ইনিও তেমন প্রিয়ার প্রথমে আবির্ভূত হইয়া কামানলসন্তপ্ত আমার মন উচ্ছ্বসিত করিতেছেন।

১৪। (দেখিয়া) লবঙ্গিকার সহিত মালতীও আসিয়াছে।

১৫। এই ইন্দীবরাক্ষীর বদনরূপ চন্দ্রের সান্নিধ্যবশতঃ উৎকৃষ্ট পর্ব্বত চন্দ্রকান্তমণি যেমন বিগলিত হইয়া দ্রবময় বিকার ধারণ করে, আমার মনও তেমন

माल। सहि! इमस्सिं कुञ्जणिउञ्जे कुसुमाइं अवचिणुम्ह (ङ)।

माध। प्रथमप्रियावचनसंश्रवस्फुरत्पुलकेन सम्प्रति मयावलम्ब्यते।
घनराजिनूतनपयःसमुक्षणक्षणबद्धकुड्मलकदम्बडम्बरः॥(१८)

---

(ङ) सखि! अस्मिन् कुञ्जनिकुञ्जे कुसुमानि अवचिनुमः।

---

अपादानविवक्षितकर्मकधातोरकर्मकत्वनियमात् कथं चकुरिति कृतादियतीत्यस्य कर्मत्वम्-मिति नु नाशङ्कनीयं, अपादानविवक्षितकर्मकधातव एवाकर्मकाः, परन्तु तत्रापादानविवक्षितकर्मणा कर्माकाङ्क्षानिवर्तते तत्रवापादानविवक्षितकर्मकधातोः कर्मान्तरं न तिष्ठेत्, यथा फलयति कलयतीत्यादि, यत्र चोद्दिष्टविधेयभावादिनाप्यवच्छिन्नकर्मताद्यं भासते, तत्र विधेयकर्मणोऽपादानविवक्षितत्वेऽपि तेनाकाङ्क्षाया अनिवृत्तेरकर्मकत्वादिदर्शनं कर्मान्तरं स्यादेव। अत एव विनूनयति पद्मानं वारिति भाष्यकारेण दर्शनं कुन्दयति घटं पूरयतीति कर्मान्तरकृतत्वं प्रदर्शितं। "आवाद्विकृतिनिवेशनमध्यवधनं सर्वेऽप्यकरादीनाम्। वर्णं दकारेण नड्डादिवाप्यपातः परिवर्तयती"त्यादिकं वाक्यमपि कम्पनावस्थितिनियतादिवाक्यमस्य तत्पूरणार्थकं बहुधापद्यते। तस्मादत चक्षुषः कर्मत्वेऽपि न कश्चिद्विरोध इति स्थितम्।

मानवतीर्षदिकवचनकारकादयः स्मरयतीत्याद्यनेकक्रियाणां प्रयोगाद्दीपकालङ्कारः। पर्याप्तवाक्यमिति केचित्। द्वितीयार्द्धे नर्तयता वेति पतिकान्ताङ्कितभाविन सङ्करः। आर्या छन्दः।

(ङ) मालेति। कुञ्जकस्य नातिदीर्घं तदा ब्रह्मेन तत्कुन्दचन्दनस्य सम्भाव्यमानता-सवाभिलाषी मालत्या कुञ्जमत एवेति भाव।

(१८) प्रथमेति। प्रथमः आदिमः यः प्रियायाः मालत्याः वचनसंश्रवः "सहि" इत्यादि वाक्यश्रवणं तेन स्फुरन् आविर्भवन् पुलको रोमाञ्चो यस्य तेन तादृशेन मया सम्प्रति

---

হিল্লোলিত ও নূতন জলধারা আমার আবার্দি প্রফুল্লিত করিতেছে, হৃদয় হৃষ্টপুলক করিতেছে ও চক্ষু কৃতার্থ করিতেছে।

(ঙ) মাল। সখি! এই কুঞ্জনিকুঞ্জে কুসুম চয়ন করি।

১৮। মাধ। প্রিয়ার প্রথম বাক্যশ্রবণে রোমাঞ্চিত হইয়া সম্প্রতি আমি মেঘের নূতন জল সেচনক্ষণে মুকুলিত কদম্বতরুর শোভা ধারণ করিতেছি।

लव। सहि एव्वं करेह्म। (ढ) [ पुष्पावचयं नाटयतः। ]

माध। अपरिमेयाश्चर्य्यमाचार्य्यकं भगवत्याः (१९)

माल। सहि! इदोवि अस्सिं अवचिणुह्म। (ण)

---

(ढ) सखि! एवं कुर्वः।

(ण) इतोऽप्यन्यस्मिन् अवचिनुवः।

---

घनराजेर्जलदजालस्य यानि नूतनपयांसि सद्योविगलितजलानि तैर्यत् समुद्गमसेचनं तत्
तत्समये वद्धानि धृतानि कुट्मलानि मुकुलानि येन तस्य तथाभूतस्य कदम्बस्य नीपवृक्ष-
डम्बरः साम्यं अवलम्बाते धत्ते।

यथा जलदजालनवजलसेचनक्षण एव कदम्बतरुः कुलितो भवति, तद्वैव प्रथमप्रियावचन-
श्रवणसमय एवाहं रोमाञ्चितो जात इति सरलार्थः।

अत्रार्थोपमालङ्कारः, स च छेकानुप्रासेन संसृज्यते। मञ्जुभाषिणी वृत्तम्। "घनवद्ध-
कुट्मलकदम्बडम्बर" इति चरणद्वाविकलमुत्तररामचरितेऽपि दृश्यते। आश्चर्यमित्यादि श्लोक-
वचेण मालत्या सखावलोकनवचनश्रवणतदन्तोपसर्पणादि-चेष्टायाः प्रतीयमानतया रतिभोगार्थायाः
समीहायाः प्रतीतेः विलासो नाम प्रतिमुखसन्धेरङ्गम्। तल्लक्षणं यथा दर्पणे—

"समीहा रतिभोगार्था विलास इति कथ्यते।"

(ढ) लवेति। एवं कुब्जकनिकुञ्जे पुष्पावचयम्।

(१९) माधेति। भगवत्याः कामन्दक्याः आचार्य्यस्य उपदेष्टुर्भाव आचार्य्यकं कार्य्यसाधनो-
पदेशकौशलं अपरिमेयाणि परिच्छेत्तुमशक्यानि आश्चर्याणि यत्र तादृशम्। राजानुरोधेन
नन्दनार्पणस्यैव सम्भाव्यमानत्वादलभ्यदर्शनामप्येनां यत् प्रभावादत्र कुसुमलवकुवोटनायोन्नमित-
करत्वेन अलसतनुकामप्यन्तर्हितो निःशङ्कमवलोकयितुं प्रभवामीति भावः।

एतेन पूर्वमवलोकितायाः पश्चादन्तरितदर्शनायाः मालत्याः पुनरनुसर्पणात् परिसर्पो नाम
प्रतिमुखसन्धेरङ्गं दर्शितम्। तल्लक्षणं यथा दर्पणे—"परिसर्पस्तु बीजस्य दृष्टनष्टानुसर्पणम्।"

(ण) मालेति। इतोऽपि प्रदेशात् अन्यस्मिन् प्रदेशे अवचिनुवः पुष्पाणीति शेषः।

---

(ঢ) লব। সখি! তাহাই করি। (উভয়ের পুষ্পচয়ন)।

(১৯) মাধ। ভগবতীর কার্য্যোপদেশ-কৌশল অতীব আশ্চর্য্যজনক।

(ণ) মাল। সখি! এই স্থান হইতে অন্য দিকে যাইয়া পুষ্পচয়ন করি।

काम। [मालतीं परिष्वज्य।] अयि! विरम, निःसहासि जाता। (२०) तथाहि—

स्खलयति वचनं ते, संश्रयत्यङ्गमङ्गम्
जनयति मुखचन्द्रोद्भासिनः स्वेदबिन्दून्।
मुकुलयति च नेत्रे सर्वथा सुभ्रु! खेद-
स्त्वयि विलसति तुल्यं वल्लभालोकनेन॥ (२१)

---

(२०) प्रच्छन्नावस्थापितमाधवो यदा निर्बाधं मालतीमवलोकयितुं प्रभवति, तदा सम्पादनार्थैव पुष्पावचयनव्याजेन तत्रानीताया मालत्या अन्यत्र गमने तद्व्याघातो भवेदिति मन्यमाना कामन्दकी पुष्पचयनार्थमन्यत्र जिगमिषन्तीं तां तत्रैवावस्थापयितुं कृतकं प्राह—अयीति। विरम निवर्तस्व कुसुमचयनादिति शेषः। यतो निःसहा पुष्पचयनजनितश्रमसहनाक्षमा [illegible] भवसि।

(२१) स्खलयतीति। हे सुभ्रु! शोभनभ्रुयुक्ते! खेदः पुष्पचयनजनितः श्रमः। "श्रमः शरीरयोः खेदः क्रियातिशयतः श्रमः" इति कोषः। ते तव वचनं स्खलयति गद्गदं करोति, तथा अङ्गं अङ्गं प्रत्यवयवं संश्रयति, सर्वान् अवयवान् व्याप्य वर्त्तते। "संश्रयतौ"ति पाठे तु अवसादयतीत्यर्थः। मुखचन्द्रोद्भासिन मुखचन्द्रस्य शोभाविशेषसम्पादनशीलान् स्वेदबिन्दून् घर्मजलकणान् जनयति। एवं नेत्रे नयने मुकुलयति निमीलयति च। अत एव वल्लभालोकनेन वल्लभकर्मकेण हृदयाभिलाषकामिनीजनकर्तृकेन दर्शनेन तुल्यं समानं यथा स्यात् तथा त्वयि सर्वथा विलसति सर्वतोभावेन वर्त्तते। वल्लभावलोकनमपि पुंसां वचनं गद्गदं करोति, अवयवानवसादयति वदने घर्मविन्दून् जनयति, आनन्दातिशयसम्पादनेन नेत्रे च निमीलयतीति तुल्यविलासाभिधानं युक्तम् एवेति मन्तव्यम्।

---

২০। কাম। (মালতীকে আলিঙ্গন করিয়া) অয়ি! পুষ্পচয়ন হইতে নিরস্ত হও। তুমি পুষ্পচয়নজনিত শ্রমে অসমর্থ হইয়াছ।

২১। দেখ, হে সুভ্রু! এই পুষ্পচয়নজনিত শ্রম তোমার বাক্য [illegible] করিতেছে, এবং এই শ্রম তোমার অঙ্গপ্রত্যঙ্গ আশ্রয় করিতেছে, মুখচন্দ্রের শোভা-বিশেষ-সম্পাদক ঘর্ম্মবিন্দু উৎপাদন করিতেছে ও তোমার নেত্রযুগল নিমীলিত করিতেছে, অতএব এই শ্রম [illegible] তুল্য রূপে তোমাতে বিরাজমান আছে।

[ मालती लज्जते । ] (२२)

लव । सोहणं भअवदीए आणत्तम् । (त)

माध । हृदयङ्गमः परिहासः । (२३)

---

( त ) शोभनं भगवत्याज्ञप्तम् ।

---

अत्र वल्लभावलोकनमिव खेदस्त्वयि विलसतीत्युत्प्रेक्षार्थसिद्धतया आर्थी पूर्णोपमालङ्कारः । एवं स्खलयतीत्यादिवाक्यार्थानां विलसतीतिवाक्यार्थहेतुतया वाक्यार्थहेतुकं काव्यलिङ्गं, खेद इत्येककर्त्तृकानां स्खलयतीत्याद्यनेकक्रियाणां प्रयोगाद्दीपकश्चालङ्कार इति तेषां सङ्करः । एवमत्र श्लेषेण लतान्तरितवल्लभकर्त्तृकावलोकनेन सह तव पुष्पचयनजनितः श्रमो विलसतीत्यर्थोऽपि व्यज्यत इति सहोक्तिरपि ध्वन्यत इत्यनुसन्धेयम् । मालिनी वृत्तम् ।

सानुरागं कान्तमवलोकयन्त्या ये अनुभावा जायन्ते श्रमवशात्त्वय्यपि ते दृश्यन्त इति परिहासगर्भोक्तित्वात् नर्म्मनाम सन्ध्यङ्गम् "परिहासवचो..नर्म्म" इति दर्पणोक्तं तल्लक्षणम् । अथात्र सुभ्रूशब्दस्यावस्थानीयत्वेनाङ्वति नदीत्वाभावेन कथं सम्बोधने ह्रस्वः सिलोपश्चेति प्रश्ने "विमानना सुभ्रु कुतः पितुर्गृहे" इत्यादि महाकविप्रयोगदर्शनादिति केचिदाचचक्षिरे । केचित्तु "जाता सुभ्रु मनोरमे तदवशे"ति रुद्रटप्रयोगवत् सामान्योपक्रमेणेत्याहुः । वस्तुतस्तत्र दुर्गसमाधानमेव साधीयः । तथाहि—"ह्रस्वश्च ङ्वती"ति सूत्रटीकायां दुर्गेणोक्तं—"कथं विमानना सुभ्रु कुतः पितुर्गृहे"इति ? मतान्तरेणास्त्रीवचन इत्यस्य व्यावर्त्तनात्, अस्त्रीवचने भवति नदीवद्भावः स्यात्, अभवति न भवति । स्त्रीवचने तु सर्व्वत्र नदीसंज्ञाऽस्त्येवेति न विरुध्यत" इति । "न समासे पुंसि ह्रस्वे युवन्दी"ति सूत्रं विदधता श्रीपतिनाप्येतदेव समर्थितम् । "सुभ्रु विभ्रान्तलोचने !" इति परमपण्डितदण्डिवचनमप्येनमर्थं समर्थयतीति स्त्रीवचने सुभ्रूशब्दस्य नदीत्वमस्त्येवेति स्थितम् । तस्मान्नात्र च्युतसंस्कारतादोषोऽपीति ।

( २२ ) लज्जते लज्जां नाटयतीत्यर्थः, क्वचित्तदेव पाठः ।

( त ) लवेति । भगवत्या यदाज्ञप्तं पुष्पावचयाद्विरमेति यदनुज्ञातं तत् साधु युक्तियुक्तम् । यतो मयापि श्रमलक्षणं लक्ष्यत इति विराम एव विधेय इति भावः ।

( २३ ) माधेति । परिहासः स्खलयतीत्यादि नर्म्मवचनं हृदयङ्गमः मनोज्ञः ।

---

२२ । ( मालती लज्जार भाव देखाइते लागिल ) ।

(त) लव । भगवती भाल आज्ञाइ करियाछेन ;

२३ । माध । एइ परिहास अतीव हृदयङ्गम ।

काम। तदास्यतां, किञ्चिदाख्येयमाख्यातुकामास्मि। (२४)

[ सर्वा उपविशन्ति। ]

काम। [ मालत्याश्चिबुकमुन्नमय्य। ] शृणु विचित्रमिदं, सुभगे!। (२५)

माल। अवहितास्मि। (घ)

काम। अस्ति तावदेकदा प्रसङ्गतः कथित एव मया माधवाभिधानः कुमारो यस्त्वमिव मामकीनस्य मनसो द्वितीयं निबन्धनम्। (२६)

---

(घ) अवहितास्मि।

---

(२४) कामेति। तत्तस्मात् आस्यतां उपविश्यतां; किञ्चिदपूर्वमेव आख्येयं वक्तव्यं आख्यातुकामा वक्तुमभिलषन्ती अस्मि—अहमिति शेषः।

(२५) कामेति। चिबुकं वदनाधोभागं उन्नमय्य लज्जावनतत्वादुत्तोल्य, शृण्वित्यध्याहृत-क्रियैककर्तृकत्वात्तत्पूर्व्वकालत्वे क्त्वाप्रत्ययः। विचित्रं आश्चर्यं, सुभगे! सौभाग्यशालिनि! अनेन माधवचित्ताकर्षकत्वात्तवासामान्यं सौभाग्यमिति ध्वनितम्।

(घ) मालेति। अवहिता अवधौ दत्तावधाना।

(२६) कामेति। प्रसङ्गतः "अस्त्यग्रशरीरो माधव" इत्यवलोकितावाक्यप्रसङ्गात् मया कथित, तवान्तिके उक्तः माधवाभिधानः माधवनामा कुमारः अविवाहितः कश्चिदस्तीत्यन्वयः। यः माधवः त्वमिव मामकीनस्य मदीयस्य (ममेदमित्यर्थे—मम-क-ईन)। मनसः चेतसः, निबध्यते स्वेनावबध्यते अस्मिन्निति निबन्धनं आलम्बनम्। मम मनसस्त्वं यथैकमालम्बनं तथा माधवो द्वितीयमालम्बनमित्यर्थः।

---

২৪। কাম। তবে উপবেশন কর, কিঞ্চিৎ বক্তব্য বিষয় বলিতে ইচ্ছা করিতেছি।

(সকলের উপবেশন)

২৫। কাম। (মালতীর বদনের অধোভাগ উত্তোলিত করিয়া) অয়ি সৌভাগ্যশালিনি! এই বিচিত্র কথা শ্রবণ কর।

(ঘ) মাল। আমি অবহিত হইয়াছি।

২৬। কাম। মাধবনামক এক কুমারের কথা প্রসঙ্গক্রমে এক দিন

लव। सुमरामो। (ढ)

काम। स खलु मन्मथोद्यानयात्रादिवसात् प्रभृति दुर्म्मनायमानः, परवानिव शरीरोपतापेन। (२७)

यदिन्दावानन्दं प्रणयिनि जने वा, न भजते,
व्यनक्त्यन्तस्तापं तदयमतिधीरोऽपि विषमम्।
प्रियङ्गुश्यामाङ्गप्रकृतिरपि, चापाण्डुमधुरम्
वपुः क्षामं क्षामं वहति, रमणीयश्च भवति॥ २८॥

---

(ढ) स्मरामः।

---

(ढ) लवेति। स्मरामः भवत्या कथितस्य माधववृत्तान्तस्येति शेषः।

(२७) कामेति। स माधवः दुर्म्मनायमानः दुर्म्मनाः दुःखितान्तःकरण इव आचरन्, शरीरोपतापेन कामजदेहदाहेन परवान् पराधीनः इव जात इति शेषः।

(२८) विशेषतो मदनदशां दर्शयति—यदिन्दाविति। यद् यस्मात् इन्दौ चन्द्रे सर्व्वलोकाह्लादकेऽपीत्यर्थः प्रणयिनि निरतिशयप्रेमास्पदे जने वा इष्टे सतीति शेषः। आनन्दं आह्लादविशेषं न भजते न लभते, तत्तस्मात् अतिधीरोऽपि निरतिशयधैर्य्यशाली अपि अयं माधवः विषमं दुःसहं अन्तस्तापं हृदयनिहितसन्तापं व्यनक्ति प्रकटयति, मुहुःसदान्तःसन्तापाभावे सर्व्वाह्लादकं सुधाकरं प्रणयिनं जनं वा समालोक्यानन्दापेक्षायां नैव सम्भवेदिति भावः। अनेनारति-सन्तापाभिधाने मदनावस्थे दर्शिते। तथा—"प्रियङ्गुः फलिनीलता" तद्वत् श्यामा श्यामवर्णा अङ्गप्रकृतिः अवयवाकृतिर्यस्य सः, तथाविधश्यामाकृतिरपीत्यर्थः, आपाण्डु विरहेणेषत् श्वेतवर्णं, तथापि मधुरं माधुर्य्यगुणवत् ("सर्व्वावस्थासु चेष्टानां माधुर्य्यं मधुराकृति"रिति माधुर्य्यलक्षणम्)। क्षामं क्षामं

---

তোমার নিকট বলিয়াছি। সে মাধব তোমারই ন্যায় আমার মনের বিশেষ আনন্দবর্দ্ধন।

(ঢ) লব। সেই মাধবের বৃত্তান্ত স্মরণ আছে।

২৭। কাম। সে (মাধব) মদনোদ্যানযাত্রার দিবস হইতে দুর্ম্মনায়মান হইয়া যেন কামজ শরীরতাপের অধীন হইয়া পড়িয়াছে।

২৮। যেহেতু সে (নিরতিশয়প্রেমাস্পদ) চন্দ্র বা প্রিয়জন কোনটিতেই আনন্দ লাভ করিতেছে না, সুতরাং সে অতি ধৈর্য্যশালী হইলেও অতি বিষম অন্তঃ

धत्ते चक्षुर्मुकुलिनि रणत्कोकिले बालचूते
मार्गे गात्रं क्षिपति वकुलामोदगर्भस्य वायोः ।
दावप्रेम्णा सरसविसिनीपत्रमात्रान्तराय-
स्ताम्यन्मूर्त्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥ २४ ॥

---

(२४) धत्ते इति। मुकुलिते सञ्जातकोरके रणत्कोकिले शब्दायमानपिके बालचूते बालत्वात् मनोहरे सहकारतरौ मृत्यवे मरणाय बहुशो वारं वारं चक्षुर्धत्ते पातयति। अत्र मुकुलिते इत्यनेन कामशायकवत्त्वं रणत्कोकिल इत्यनेन च कामसैन्यसान्निध्यमुक्तं, तथाच कोकिलकुलसमाकुलितादस्मात् तरुचाग्रचितं कोरकनाराचमवश्यं मम चक्षुर्भित्वा प्राणनाशं विधास्यतीत्यभिप्रायेण—दृष्टिविषसर्प इव विरहिजनातिदुःसहेऽपि सहकारतरौ मरणाय पुनः पुनर्दृष्टिं पातयतीति भावः। तथा—वकुलामोदः केसरकुसुमसौरभं गर्भे मध्ये यस्य तस्य वायोर्दक्षिणानिलस्य मार्गे निर्गमपथे मृत्यवे बहुशो गात्रं देहं क्षिपति न्यस्यति। किमनेन दुःखानुभवदुर्वहदेहेन ? कामनाराचधारापातसमुत्थोऽयं वायुरेवैनम् चूर्णयतु इत्यभिप्रायेणेत्यर्थः। चन्दनाचलमन्दगन्धवहस्य विरहिजनातिदुःसहतया कामबाणपातसमुत्थत्वकल्पनं नाशकत्वकल्पनञ्च न विरुद्धमिति मन्तव्यम्। किञ्च—सरसं आर्द्रं यत् विसिनीपत्रं विरहजदाहशमनाय परिजनोपनीतं सरोजपत्रं तन्मात्रं अन्तरायः दाहप्रतिबन्धको यस्य सः, सरससरोजपत्राभावे विरहजदाहेनैव नाशसम्भवाद्दावप्रीतिर्न स्यादिति भावः। "पत्रमात्रोत्तरीय" इति पाठे तादृशं पत्रमात्रं उत्तरीयं प्रावरणं यस्येत्यर्थः। तथा ताम्यन्ती ग्लानिं प्राप्नुवन्ती मूर्त्तिराकृतिर्यस्य स तादृशः) गवाक्षस्थितासावित्यस्य विशेषणम्। दावप्रेम्णा सन्तापकत्वाच्चन्द्रकिरणेषु दावानलबुद्ध्या मरणसाधकतया तत्पक्षपातेनेत्यर्थः, मृत्यवे मरणाय बहुशो वारं वारं चन्द्रस्य पादान् किरणान् श्रयति सेवते। विरहिजनानां निरतिशयसन्तापकं यद्यत् तत् सर्वमेवासौ मरणायावलम्बत इत्यर्थः। "दवदावौ वनारण्यवह्नी" इति ॥ पादा रश्म्यङ्घ्रितुर्य्यांशा" इति चामरः।

---

৩৪। এই মাধব মরণের জন্য মুকুলিত ও শব্দায়মান কোকিলযুক্ত নব সহকার বৃক্ষে বার বার দৃষ্টি নিক্ষেপ করিতেছে। বকুলপুষ্পগন্ধামোদিত বায়ুর সঞ্চরপথে মরণের জন্য বারবার গাত্র পাতিয়া রাখিতেছে। এবং নিতান্তম্লান-মূর্ত্তি হইয়া পরিজনসমানীত সরস কমলিনীপত্রকেই একমাত্র বিরহানল কর্ত্তৃক দাহের বিঘ্নস্বরূপ মনে করিয়া অতি সন্তাপকত্বনিবন্ধন দাবানলবোধে মরণের জন্য বারবার চন্দ্রকিরণের সেবা করিতেছে।

माध। अन्य एव अश्रुतः कथाप्रकारो भगवत्याः। (२५)

माल। [ स्वगतं। ] अदिदुक्करं करेदि। (न)

काम। तदेवं प्रकृत्या सुकुमारः कुमारः कदाचिदपि अन्यत्र अपरिक्लिष्टपूर्व्वस्तपस्वी, यतोऽधुना शक्यमनेन मरणमपि अनुभवितुम्। (२६)

---

(न) अतिदुष्करं करोति।

---

अत्र कुसुमितानोत्यादिविशेषणानां साभिप्रायत्वात् परिकरालङ्कारः। तथा चतुर्थचरणे—एकस्मिन् काय्ये धत्ते इत्यादि बहुक्रियाणां साधनत्वेनोपन्यासात् समुच्चयालङ्कारः। तासां क्रियाणामसावित्येककर्तृकत्वाद्दीपकालङ्कारश्चेति तेषामङ्गाङ्गिभावेन सङ्करः। मन्दाक्रान्ता वृत्तम्।

(२५) माधवेति। अन्य एव साधारणोक्तप्रकाराद्विलक्षण एव अनन्यसाधारण इति यावत्, अश्रुतः अदृष्टः, कथाप्रकारः कथनक्रमः।

(न) मालतीति। अतिदुष्करं मरणाध्यवसायं मदसाध्यमित्यर्थः, करोति च माधव इति शेषः, क्वचित् पुस्तके "च" इति मूलोक्त एव पाठः।

(२६) कामेति। यतो यस्मात् अनेन माधवेन तदेवं उपक्रमेण मरणमपि अधुना अनुभवितुं शक्यं, अतः प्रकृत्या स्वभावेन कुमारः उत्तमसौकुमार्य्यशाली "सौकुमार्य्यं विधाभिन्नं चेतनध्यापनक्रमात्। इतूनपल्लवस्पर्शासहं यत् स्यात्तदुच्यते"। कुमारः अकृतदारः (एतेन विशेषतो युवतिजनवरणीयत्वं सूचितम्)। अन्यत्र त्वद्भिन्नायां तरुण्यां अपरिक्लिष्टपूर्व्वः पूर्व्वं अक्लिष्टः पूर्व्वमीदृशकष्टसम्पादनाविषयीभूत इत्यर्थः। (अनेनाननुभूतपूर्व्वत्वात् क्लेशस्यातिदुःसहत्वं त्वमेव प्रथमानुरागविषय इति धन्या त्वमिति च ध्वन्यते)। अयं माधवः तपस्वी अनुकम्पनीयः "तपस्वी तापसे चानुकम्प्ये च" इति विश्वः। त्वमप्यस्मिन्ननुरक्ते अनुरागयोग्ये जने अनुरक्ता सती एनं रक्षस्वेति भावः।

---

৩৫। মাধব। ভগবতীর কথার উপক্রম সর্ব্বতোভাবেই বিলক্ষণ ও নির্দ্দোষ।

(ন) মাল। (স্বগত) অতি দুষ্কর করিতেছে।

৩৬। কাম। স্বভাবতঃ অতি কোমল অবিবাহিত এই মাধব যেহেতু কখনও কোন স্ত্রীবিষয়ে এরূপ ক্লেশ অনুভব করে নাই, তাতেই ইহার পক্ষে মরণও অসম্ভব নহে।

अविअ। विअसिआरविन्दमअरन्दणिस्सन्द-सुन्दरेण, दर-दलिअ-कुन्दमाअन्द-महुबिन्दुसन्दोहवाहिणा, मअणुज्जाणपेरन्तमारुदेण उत्ताम्मदि। (व)

अणं अ जदोप्पहुदि तस्सिं जत्तादिअहे णिअमहूसवाब्भुदअ-दंसण-पडिपण्णरूवस्स भअवदो कामस्स विअ, कामकाणणालङ्कार-धारिणो तस्स, विविहविब्भमाहिरामं, अणुरूआणुराआणुबन्धमङ्-

---

(व) अपि च। विकसितारविन्दमकरन्दसुन्दरेण कुन्दमाकन्दमधुबिन्दुसन्दोहवाहिना मदनोद्यानपर्यन्तमारुतेन उत्ताम्यति।

(भ) अन्यच्च, यतः प्रभृति तस्मिन् यात्रादिवसे, निजमहोत्सवाभ्युदयदर्शनप्रतिपन्नरूपस्य भगवतः कामस्येव, कामकाननालङ्कारधारिणः तस्य, विविध-विभ्रमाभिराममनुरूपानुरागानु-

---

(व) अपिचेति। विकसितानाम् अरविन्दानां मकरन्दनिस्यन्देन निर्यासद्रवेण तत्संपर्केणेत्यर्थः, सुन्दरः गन्धवत्त्वेन मनोहरः तेन, तथा दरविदलितौ ईषद्विकसितौ ("ईषदर्थे दराव्यय"मित्यमरः)। यौ कुन्दमाकन्दौ कुन्दचूतकुसुमे ("माकन्दः सहकारेऽस्त्री धावीनवरभेदयो"रिति मेदिनी)। तयोर्मधुबिन्दुसन्दोहं मधुकणसमूहं वहति धारयतीति तेन तथाभूतेन पुष्पनिर्यासवत्त्वसम्पर्कादतिसौरभेणेत्यर्थः। मदनोद्यानस्य पुरसन्निविष्टोपवनस्य पर्यन्तमारुतेन तत्प्रान्त-सञ्चारिणा वायुनेत्यर्थः, उत्ताम्यति अतीवाधीरा भवति। (एतेनोद्दीपनविभावजनिता वेदनाभिहिता)।

(भ) अन्यच्चेति। निजस्य स्वस्य यो महोत्सवः स एव अभ्युदयः ऋद्धिः तस्य दर्शनाय प्रतिपन्नरूपस्य अनङ्गत्वेऽपि स्वप्रभावेन साक्षादङ्गीकृतविग्रहस्य भगवतः कामस्य मदनस्येव कामकाननालङ्कारकारिणः स्वकान्त्या मदनोद्यानशोभाभिवृद्धिविधायिनः तस्य माधवस्य विविधै-र्नानाप्रकारैः विभ्रमैर्विलासैः अभिरामं मनोहरं अनुरूपस्य समुचितस्य प्रियजनाभिलाषविशेषस्य

---

(ব) অপর এই যে, বিকসিত নির্য্যাসসংস্রবে সদ্গন্ধযুক্ত ও ঈষদ্বিকসিত কুন্দ এবং চূতকুসুমের মধুকণবাহী মদনোদ্যানপ্রান্তসঞ্চারী বায়ুদ্বারা সে অতীব অধীরা হইতেছে।

(ভ) আরও এই যে, সেই যাত্রাদিবসে যে সময় হইতে নিজমহোৎসবরূপ অভ্যুদয়দর্শনের জন্য শরীরধারী কামদেবের ন্যায় মদনোদ্যানের অলঙ্কারকারী সেই মাধবের বিবিধবিলাস-মনোহরসমুচিতানুরাগানুসরণদ্বারা যৌবনারম্ভের

गव्वीकिदजोव्वणारम्भं अण्णोण्णदिट्ठिविणिवादवञ्चणावसरखिज्जमाण-चित्ततुवरन्तकोदूहलं समुल्लसिद-सद्धसत्थम्भमन्थरावअवपडिलग्गसेअ-पुलअउक्कम्प-सुन्दरं, आणन्दिदसहीअणं पियसहीए परप्परावलोअण-सुहं समासादिदं, तदो पहुदि, सविसेस-दूसहाआसविजिम्भमाणुद्दाम-देहदाहदारुणं दसापरिणामं अणुभवन्ती, मुहुत्त-मेत्तसम्पत्तपुण्ण-चन्दोदआ बालकमलिणी विअ पम्मलाअदि । (भ)

---

बन्धमहार्घीकृतयौवनारम्भमन्योऽन्यदृष्टिविनिपातवञ्चनावसरखिद्यमानचित्तत्वरमाणकौतूहलं, समुल्लसितसाध्वसस्तम्भमन्थरावयवप्रतिलग्नस्वेदपुलककोत्कम्पसुन्दरं, आनन्दितसखीजनं, प्रियसख्या परस्परावलोकनसुखं समासादितं, ततः प्रभृति, सविशेषदुःसहायासविजृम्भमाणोद्दामदेहदाहदारुणं दशापरिणाममनुभवन्ती मुहूर्त्तमात्रसम्प्राप्तपूर्णचन्द्रोदया बालकमलिनीव प्रम्लायति ।

---

अनुबन्धेन अनुवर्त्तनेन महार्घीकृतः श्लाघ्यीकृतः यौवनारम्भो येन तत् तथोक्तं, तथा अन्योन्यदृष्टिविनिपातः परस्परदृष्टिनिक्षेप एव वञ्चना विरहकालदुःखदत्वात् प्रतारणा तस्या अवसरे समये खिद्यमानं कामभावोदयेन सन्तप्तं यच्चित्तं तस्मिन् त्वरमाणं सत्वरं कौतूहलं अवलोकनस्यैव कौतुकं यस्मिन् तत् एवं समुल्लसितेन उत्पन्नेन साध्वसेन भयेन यः स्तम्भः स्तब्धीभावः तेन मन्थरेषु निश्चेष्टेषु अवयवेषु हस्तपदादिषु प्रतिलग्नाः उत्पाद्य वर्त्तमानाः ये स्वेदपुलककोत्कम्पाः घर्मरोमाञ्चकम्पाः सात्त्विकभावविशेषाः तैः सुन्दरं अत एव आनन्दिताः स्वयोग्यजनालोकनजनितानुरागैवेयमवस्थेति सन्तुष्टाः सखीजना येन तत् तथाभूतं परस्परावलोकनसुखं यतः प्रभृति प्रियसख्या मालत्या समासादितमित्यन्वयः । ततः प्रभृति सविशेषः सातिशयः अत एव दुःसहः य आयासः कामजखेदविशेषः तेन विजृम्भमाणो वर्द्धमानः उद्दामः महान् यो देहदाहः शरीरसन्तापः तेन दारुणं भीषणं दशापरिणामं अवस्थापरिणतिं अनुभवन्ती इयं मालतीति शेषः । मुहूर्त्तमात्रं अत्यल्पसमयमात्रं सम्प्राप्तः अर्धाहृतः पूर्णचन्द्रोदयो यया सा तथाभूता सती पर्याप्तविशेषणा बालकमलिनी नवनलिनीव (बालपदमतिकोमलताद्योतनार्थं)। प्रम्लायति अवसीदति, पक्षे मुद्रिता भवति । यथा पूर्णचन्द्रोदयदर्शनमात्रेणैव बालकमलिनी सङ्कुचिता

---

শোভাসম্পাদক পরস্পর দৃষ্টিনিক্ষেপরূপ প্রতারণাবসরে কামভাবোদয়নিবন্ধন চিত্ত সন্তপ্ত হইলে অতিত্বরায় দর্শনকৌতূহলশালী, সমুৎপন্ন ভয়জনিত স্তম্ভ বশতঃ নিশ্চেষ্টাবয়বে প্রতিলগ্ন স্বেদ, রোমাঞ্চ ও কম্পদ্বারা মনোহর এবং সখী-

तथावि अ, मुहुत्तमेत्त-हिअअविणिहिदणिअ-वल्लह-समागमा, णिब्भर-सलिलासारसिच्चमाणिव्व मेइणी सीदलाअदित्ति जाणामि। जेण पप्फुरिद-कन्तदसणच्छदुज्जलन्तदन्तमुत्तिआवलिकन्ति सविसेस-सोहिदं, णिरन्तरुल्लसिद-पुलअ-पम्हलकवोलघोलन्तसंददानन्दवाहत्थ-

(स) तथापि च, मुहूर्त्तमात्रहृदयविनिहितनिजवल्लभसमागमा निर्भरसलिलासारसिच्यमानेव मेदिनी शीतलायत इति जानामि। येन प्रस्फुरत्कान्तदशनच्छदोज्ज्वलद्दन्तमौक्तिकावलिकान्ति-सविशेषशोभितं, निरन्तरोल्लसितपुलकपक्ष्मलकपोलघूर्णमानसन्ततानन्दबाष्पस्तवकमीषद्विकसित-

भवति, तथेयमपि मालती तद्विरहवेदनामनुभवन्ती चन्द्रोदयदर्शनमात्रेणातितरमवसादं लभत इति सरलार्थः। विरहिणीनामतिदुःखप्रदत्वाच्चन्द्रदर्शनस्येति भावः। अथवा यथा पूर्णचन्द्रोदय-दर्शनमात्रेणैव कमलिनी म्लानिं भजते, तथैव तादृशातिदुःसहं दशापरिणाममनुभवन्ती मालती म्लानिं भजत इत्यर्थः। एवञ्च—मुहूर्त्तेत्यादि विशेषणं कमलिनीपक्ष एव योज्यम्।

( स ) अथैवमवसन्ना चेत् कथं जीवतीत्याह—तथापि चेति। तादृशकामदशापरिणामा-वसन्नापि चेत्यर्थः। मुहूर्त्तमात्रमत्यल्पकालं हृदये विनिहितः कल्पनया निर्म्मितः निजवल्लभस्य स्वप्रियस्य माधवस्य समागमो यया सा, अत एव निर्भरेण अतिशयितेन सलिलासारेण वर्षणधारा-सम्पातेन सिच्यमाना आर्द्रीक्रियमाणा मेदिनी पृथिवीव शीतलायते कथञ्चिदुपशमितमदन-सन्तापा शीतलेव आचरति, इति जानामि अनुमिनोमि। सङ्कल्पोपनीतप्रियसमागम एवास्याः सञ्जीवनौषधिरिति भावः। एतेन सङ्कल्प उक्तः। सङ्कल्पोपनीतप्रियसमागमानुमाने हेतुं दर्शयति—येनेति। तत्र समागमाङ्गं प्रियचुम्बनानुभवं दर्शयितुं मुखं विशिनष्टि—प्रस्फुरदो-त्यादिना। प्रस्फुरद्भ्यां स्पन्दमानाभ्यां रदनच्छदाभ्यां ओष्ठाधराभ्यां उज्ज्वलन्ती प्रकाशमाना या दन्तमौक्तिकपंक्तिः दन्तरूपमौक्तिकश्रेणिः तस्याः कान्त्या शोभया सविशेषं सातिशयं शोभितं भूषितम्, तथा निरन्तरोल्लसितैः घनभावेनोत्पन्नैः पुलकैः रोमाञ्चैः पक्ष्मलयोः कण्टकितयोः

জনের আনন্দজনক পরস্পরাবলোকনসুখ প্রিয়সখী অনুভব করিয়াছিল, সেই হইতেই অতিশয় দুঃসহ কামজ খেদে পরিবর্দ্ধমান দেহদাহদ্বারা ভীষণ অবস্থা-পরিণাম অনুভব করতঃ অতি অল্পকালমাত্র চন্দ্রোদয়দর্শনে নব নলিনীর ন্যায় ম্লানভাব ধারণ করিতেছে।

(ব) তাদৃশ কামদশাপরিণামে অবসন্না হইয়াও মুহূর্ত্তমাত্র হৃদয়ে মাধব-সমাগমের কল্পনা করতঃ অতিশয় বর্ষণধারায় আর্দ্রীভূত মেদিনীর ন্যায়

उअं ईसि-विअसिदणिप्फन्दमन्दतारुत्ताणमउलाअन्तणेत्त-णीलुप्पलं, अविरलुब्भिस-सेअजलविन्दूसुन्दर-ललाटपट्टं णवचन्दलेहा-मणोहरं मुहमुहपुण्डरीअमुव्वहन्ती, विअद्ढसहअरीचित्त संसइद-कोमारभावा भोदि। (म)

---

निष्पन्दतारोत्तानमस्पन्दमुकुलायमाननेत्रनीलोत्पलं, अविरलोद्भिन्नस्वेदजलविन्दुसुन्दरललाटपट्टं नव-चन्द्ररेखामनोहरं मुग्धमुखपुण्डरीकम् उद्वहन्ती विदग्धसहचरीचित्तसंशयितकौमारभावा भवति।

---

कपोलयोः गण्डयोः उपरीत्यर्थः, घूर्णमानः अभिष्यन्दमानः सन्ततः अविरलधारः आनन्दबाष्पस्तवकः चुम्बनानन्दानुभवसमुत्थाश्रुजलसमूहः यत्र तत् तथोक्तम्। उद्भस्योपनीतवल्लभं प्रति—दर्शनप्रकारं दर्शयितुं विशिनष्टि—ईषदित्यादिना। ईषद्विकसिते बलवद्दिदृक्षासत्त्वेऽपि लज्जावशात् किञ्चि-द्विकसिते निष्पन्दे सौन्दर्यातिशयचिन्तया क्वचिन्निबद्धे मन्दतारे सकौतुकदर्शनादनतिविक-सिततारायुगले उत्ताने ऊर्द्ध्वदेशदर्शनार्थं कदाचिदुन्नमिते नयने लोचने मुकुलायमाने मुकुल इवाचरन्ती कुड्मलसदृशी इत्यर्थः, नेत्रोत्पले नयनेन्दीवरे यत्र तत् तथाभूतम्। उद्भस्योपस्थापित-प्रियेण सह रतिक्रमानुभवं दर्शयितुं विशिनष्टि—अविरलेत्यादिना। अविरलं अविश्रान्तं यथा स्यात्तथा उद्भिन्नैः उत्पन्नस्वेदजलविन्दुभिः घर्म्मोदककणैः सुन्दरं ललाटपट्टं कपालदेशो यस्मिन् तत् तथाभूतं एवं नवचन्द्ररेखामनोहरं नवोदितेन्दुकलाभिरामं मुग्धं मनोहरं मुखपुण्डरीकं वदनसरोजं उद्वहन्ती धारयन्ती मालती येन कारणेन दन्तच्छदस्फुरणादिना संभोगचिह्नेन विदग्धाभिः पण्डिताभिः सुचतुराभिरिति यावत्। सहचरीभिः सखीभिः चित्ते स्वचेतसि संशयितः सन्देहगोचरीकृतः कौमारभावः अपरिणीतावस्थात्वं यस्याः सा तथाभूता भवति,—तेनैवकारणेन मुञ्चर्त्तनावहृदयनिहितवल्लभसमागमेयमिति जानातीत्यन्वयः।

---

শীতলভাব ধারণ করিতেছে বলিয়া আমি অনুমান করি। যে হেতু ইহাঁহাদের স্পন্দনবশতঃ প্রকাশমান দন্ত মৌক্তিকশ্রেণীর কান্তিদ্বারা বিশেষরূপে পরি-শোভিত, নিরন্তরোৎপন্ন রোমাঞ্চদ্বারা কণ্টকিত, গণ্ডদেশে অবিরলধারে অভিষ্যন্দ-মান (চুম্বনানুভবজনিত আনন্দাশ্রুপরিব্যাপ্ত, ঈষদ্বিকশিত নিঃস্পন্দ নাতিবিকসিত-তারাযুক্ত উন্নমিত লোচন এবং কুবলয়ের ন্যায় পরিদৃশ্যমান নেত্রযুগল-শালী, অবিশ্রান্ত উৎপন্ন ঘর্মবিন্দুদ্বারা সুন্দর ললাটপট্টযুক্ত ও নূতন চন্দ্রলেখার ন্যায় মনোহর, মুখপুণ্ডরীক ধারণ করিয়া সুচতুরা সখীদিগের চিত্তে এইরূপ সন্দেহ জন্মাইতেছে যে, এখনও অবিবাহিতা অবস্থা আছে কি না?

कधंवि उवलद्धणिद्दासुहा सेदपप्फुरिदपाद-पल्लवुव्वन्तपिण्डालत्त-अरसा थरथराअन्त-पीवरोरुमूलपासविसंवादिणीविबन्धना उक्खुव्-भन्त-हिअअन्तरुत्तरंगणीसासविसमसमूच्छसन्तपह्मल-पओहरोवरि-णिहिंतवेवन्तभुअलदावेट्टनबन्धणा झत्ति पड़िबोधवेलाविसज्जिद-

---

( २ ) कथमपि उपलब्धनिद्रासुखा स्वेदप्रस्फुरितपादपल्लवोद्वान्तपिण्डालक्तकरसा, थरथराय-मानपीवरोरुमूलपार्श्वविसंवादिनीविबन्धना, उत्क्षुभ्यमानहृदयान्तरोत्तरङ्गनिश्वासविषमसमुच्छ्सत्-पक्ष्मलपयोधरोपरिनिहितवेपमानभुजलतावेष्टनबन्धना, झटिति प्रतिबोधवेलाविसर्ज्जितोद्दिष्टदयि-

---

न च कमलिनीपत्रस्य तालवृन्तत्वासम्भवादयोग्यमिदं वाक्यमिति शङ्कनीयं, तालवृन्तपदस्य व्यजनमात्र एव रूढत्वात् । अत एवामरसिंहेनापि—"व्यजनं तालवृन्तक"मिति व्यजनसामान्य-परत्वमेवोपदिष्टं । "सञ्चालयामि नलिनीदलतालवृन्तं"मित्यादिकालिदासादिवाक्यमपि तथैव प्रति-पादयतीत्यनुसन्धेयम् ।

( २ ) स्वाभाविकनिद्राविगमेऽपि चिन्ताजनितां निद्रां दर्शयति—कथमपीति । "दौर्ब्बल्या-दसुखचिन्तादेर्निद्रा स्यात् कथमपि वे"ति निद्रायाश्चिन्ताजनितत्वे प्रमाणम् । कथमपि प्रबल-दुश्चिन्तया इत्यर्थः । उपलब्धं निद्रैव सुखं स्वप्नेन प्रियसमागमसम्पादकत्वात् परमानन्दरूपं यया सा, अत एव स्वेदेन स्रुप्त[?]-सुरतश्रमजनितघर्म्मजलेन प्रस्फुताभ्यां व्याप्ताभ्यां पादाभ्यां चरणाभ्यां उद्वान्तः द्रवीभूय पतितः पिण्डालक्तकरसः पिन्डीभूतो लाक्षाद्रवो यस्याः सा, थरथराय-मानं स्वप्ने वल्लभोरुयुगलाक्रमणानुभवात् कम्पमानं यत् पीवरं महत् उरुमूलं तस्य पार्श्वात् समीपात् विसंवादि वल्लभाकर्षणभावनया स्खलितं नीविबन्धनं यस्याः सा, ( थरथरायमाणेति शब्दो ग्राम्यः कम्पार्थकः) तथा उत्क्षुभ्यमाणस्य कामसन्तापेन क्षुब्धीक्रियमाणस्य हृदयस्य अन्तर्म्मध्ये उत्तरङ्गाः निरुद्धवेगतया समुद्वेल्लिताः ये निश्वासाः तैः विषमं स्फीतिमद्यं यथा स्यात्तथा समुच्छ-सद्भिः समुद्गच्छद्भिः पुलकैः रोमाञ्चैः पक्ष्मलौ कण्टकितौ यौ पयोधरौ स्वकीयस्तनौ तयोरुपरि-निहिताभ्यां वल्लभभुजभावनया स्थापिताभ्यां भुजलताभ्यां स्वकीयबाहुवल्लीभ्यां यत् आवेष्टनं तदेव बन्धनं वल्लभालिङ्गनं यस्याः सा । तादृशस्वप्नभङ्गकालीनावस्था कथयति—झटितीति ।

---

(২) অতি দুশ্চিন্তাবশতঃ কোনোরূপে নিদ্রাসুখলাভ করিলেও স্বপ্নের সুরত-শ্রমজনিত ঘর্মজলধারায় চরণযুগল হইতে তরল অলক্তক রসগুলি (ঘর্মজলে দ্রব হইয়া) ক্ষরিত হইতে থাকে। (স্বপ্নে উরুযুগল আক্রমণ করিতেছে, এইরূপ অনুভব করায়) থর থর কম্পান্বিত স্থূল উরুমূলের সমীপদেশ হইতে (কাঞ্চ-

ब्भिगदिट्टि-विणिवादविसादसुसससअणिज्जसञ्जादमोहमीलन्तलोअणा ससम्भमसहीअण-पअत्तपढिवसमुच्छाविच्छेअसमअ-संगलिददीहणीसासजणिदजीविदासा, किंकादव्वदामूढदाए पढ़मपत्थिदणिअजीविदावसाणं दुव्वारदेव्वविलसिदोवालम्भमेत्तव्वावारं अम्हारिसं जणं करेदि। (र)

---

विनिपातविश्रातशून्यशयनीयसञ्जातमोहमीलल्लोचना, ससम्भ्रमसखीजनप्रयत्नप्रतिपन्नमूर्च्छाविच्छेद-समयसङ्गलितदीर्घनिश्वासजनितजीविताशा किंकर्त्तव्यतामूढ़तया प्रथमप्रार्थितनिजजीवितावसानम् दुर्वारदैवविलसितोपालम्भमात्रव्यापारमस्मादृशं जनं करोति।

---

झटिति शीघ्रं प्रतिवोधवेलायां जागरणकाले विसर्जिता निक्षिप्ता उद्विग्ना वल्लभविच्छेदशङ्कया सत्रासावस्था या दृष्टिः तस्याः विनिपातेन सन्निकर्षेण विश्रान्तं अवगतं शून्यं वाञ्छितजनविरहितं यत् शयनीयं शय्या तस्मिन् सञ्जातः वल्लभवियुक्ततादर्शनेन पुनरुत्पन्नो यो मोहः तेन मीलती पुनर्निमीलिते लोचने नेत्रे यस्याः सा तथाभूता। ससम्भ्रमाणां चैतन्यसम्पादनाय सत्वराणां सखीजनानां प्रयत्नेन शीतलानिलसञ्चालनादिव्यापारेण प्रतिपन्नः उत्पन्नः यो मूर्च्छाविच्छेदः मोहविगमः तस्य समये काले सङ्कलितेन बहिर्गतेन दीर्घनिश्वासेन जनिता उत्पादिता जीविताशा जीवनमस्तीति सखीजनानां विश्वासो यस्यां सा तथाभूता मालती अस्मादृशं जनं सखीजनसमूहमित्यर्थः। किङ्कर्त्तव्यतामूढ़तया कर्त्तव्यावधारणासामर्थ्येन प्रथमप्रार्थितं प्रथमाभिलषितं निजजीवितस्य स्वस्य जीवनस्य अवसानं विनाशो येन तं, तथा दुर्व्वारस्य साधारणनृपैरप्रतिकार्य्यस्य दैवस्य नियतेर्यत् विलसितं अभिप्रेतं कार्य्यं तस्य उपालम्भमात्रः तिरस्कारमात्रः व्यापारः अनुष्ठानं यस्य तं तथाभूतं करोति। प्रार्थितवल्लभस्यातिदुर्लभतया तादृशीं विषमां दशामनुभवन्त्या मालत्या अत्याहितमकथ्यमचिरमेव भविष्यतीति शङ्कातङ्कितचित्ता वयं अति दुःसहात् तदत्याहितापतनात् पूर्व्वमेवास्माकं पतनं कामयामहे, अन्यसामर्थ्याभावेन चाप्रतिविधेयं दैवविलसितमेव केवलमुपालभामहे इति भावः।

---

कर्त्तृक আকর্ষণভাবনায়) নীবিবন্ধন শিথিল হইয়া যায়। কামজ সন্তাপক্ষুব্ধ হৃদয়মধ্যে সমুদ্বেলিত নিশ্বাসবশে বিষমরূপে সমুৎপন্ন রোমাঞ্চদ্বারা কণ্টকিত নিজস্তনযুগলের উপরিভাগে (বল্লভের ভুজলতাবিবেচনায়) নিজের ভুজলতা স্থাপন করিয়া তৎপরিবেষ্টনরূপ কান্তালিঙ্গন অনুভব করিতে থাকে। হঠাৎ

इति नन्दितमप्यवस्थयाऽस्या हृदयं दारुणया विदार्य्यते मे ॥ (३८)

---

इमे च नातिदूरवर्त्तिनः, उल्लसिता उद्दीप्ता दुग्धसिन्धुपूरवत् क्षीरसमुद्रप्रवाहवत् धवला शुभ्रा उज्ज्वला दीप्तिमती च या ज्योत्स्ना सैव जलं तेन प्रक्षालितं विधौतं तन्नोपचारेण निर्म्मलीकृतमिति यावत्, नभोऽङ्गनं आकाशप्रदेशो येषु ते। तथा परिमलितानि सञ्जातपरिमलानि (तारकादित्वादितच्) यानि पाटलावकुलानि कुसुमविशेषाः तेषां निर्म्मथनेन विमर्द्दनेन यो बहुलानां प्रभूतानां परिमलानां सौरभाणां उद्गार उद्गमः तेन यत् संवलनं मिश्रीभावः तेन मसृणः कोमलः मांसलायमानः मांसलः पुष्ट इवाचरन् यो मलयमारुतः दक्षिणानिलः तेन उद्धूमायितानि उद्गतधूमायमानानि कृतानि (उद्गता धूमा येषु तानि उद्धूमानि, उद्धूमानीवाचरन्तीति उद्धूमायानि आयन्तात् पचादित्वादच्, तानि कृतानीति करोत्यर्थे—उद्धूमायशब्दादिन्, तत उद्धूमायीतीनन्तधातोः कर्म्मणि क्तप्रत्ययेन उद्धूमायितानीति सिद्धम्) दशदिङ्मुखानि सकलदिक्चक्राणि येषु ते तथाभूताः वसन्तरजनीपरिणाहा वसन्तकालीनविभावरीविशालताः विरहवशादतिदीर्घवत् प्रतीयमाना वसन्तत्रियामा इत्यर्थः। प्रियसख्या मालत्याः कथं कीदृशा अनर्थकारिणः विपत्तिसम्पादिनः भविष्यन्ति। इति च भगवती प्रेक्षतामित्यन्वयः।

अत्र कथं वि उवलद्धनिद्दासुहा इत्याद्येतदन्तवाक्यैः दारुणत्वेऽनिवारणोपायादर्शनात् "तापनं" नाम प्रतिमुखसन्धेरङ्गम्। तल्लक्षणं यथा दर्पणे—"उपायादर्शनं यत्तु तापनं नाम तद्भवे"दिति ॥

(३८) यदीति। अनुरागबन्धः मालत्या गाढानुरागः यदि तद्विषयः स माधव एव विषयो यस्य तादृशः माधवालम्बन इति यावत् अभवदिति शेषः, तदा एतद्धि एतदेव गुणज्ञतायाः गुणपक्षपातस्य स्फुटं व्यक्तं फलम्। माधवः समतीव गुणवानिति तदनुरागो युक्त एवेति भावः। इति हेतोः अस्मादनुरागाद्धेतोरित्यर्थः, नन्दितमपि आह्लादितमपि मे मम हृदयं अस्याः मालत्याः

---

এবং সঞ্জাতপরিমলপাটলা কুসুমের বিমর্দনবশতঃ বহলামোদোদ্গমসংমিশ্রণে মসৃণ ও পরিপুষ্টাচারী দক্ষিণানিল দিক্‌সমূহকে ধূমযুক্তের ন্যায় করিয়া থাকে, বিরহবশতঃ দীর্ঘবৎ প্রতীয়মান বসন্তরজনীই বা প্রিয়সখীর পক্ষে কিরূপ অনর্থকারিণী হইবে, ইহাও ভগবতী ভাবিয়া দেখিবেন।

(৩৮) কাম। লবঙ্গিকে! মালতীর এই গাঢ়ানুরাগ যদি মাধবের প্রতিই হইয়া থাকে। তবে ইহা নিশ্চয়ই গুণজ্ঞতার সুব্যক্ত ফল। এই অনুরাগে

[ नेपथ्ये कलकलः । (४४) सर्वे आकर्णयन्ति । ]

[ पुनर्नेपथ्ये । ] रे रे सङ्करघराधिवासिणो जाणवदा ! एसो क्खु जोव्वणारम्भ-गव्वसम्भरिद-दुव्विसहामरिसरोस-व्वदि-अर-बलामोडि-विहडिदुग्घाडिद-लोहपञ्जर-पडिलग्ग-संगलिअ-णिअलो*णिअलीला-विलासुव्वेलिअवलहतुङ्गलङ्गूलविअडवेजअन्तिआ-विसमडामरुद्दाम-सरीर-सण्णिवेसो, मडादो अवक्कमिअ, तक्खणसतिह्निक-वलिदाणि-अदेहि देहावयवमञ्झणिट्ठुरअत्थिखण्डखण्डनटङ्कार-कडकडा-अन्त-करवत्तकठिणदाढ़ा-करालमुहकन्दरो, पअण्डवज्जणिग्घाद-दारुण-

---

(प) रे रे शङ्करगृहवासिनो जानपदाः ! एष खलु यौवनारम्भगर्वसंभृतदुर्विषहामर्ष-रोषव्यतिकरबलात्कार-विघटितोद्घाटितलोहपञ्जरप्रतिलग्नशृङ्खलितनिगडः, निजलीलाविलासो-

---

तथा रमणीयत्वेन नायतोकुचकलशादयाकाङ्क्षाप्रतीतेः "स्पृहा" नाम नाट्यालङ्कारः । तल्लक्षणं यथा दर्पणे—"आकाङ्क्षा रमणीयत्वाद्वस्तुनो या स्पृहा तु सा" ।

"पुष्पं" नाम प्रतिमुखसन्धेरङ्गम् । तल्लक्षणं यथा दर्पणे—"पुष्पं विशेषवचनं मत"मिति ।

अत्र यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दानपेक्षणाद्विधेयाविमर्शदोषाभावः । पुष्पिताग्रा वृत्तम् ।

(४४) एवमन्योऽन्यानुरागद्योतकपरस्परावस्थाकीर्तनेन शृङ्गाररसं परिपोष्य रसान्तरेण तं विरोधयितुं "चूलिका" नामकार्थोपक्षेपणमाह—नेपथ्य इति । चूलिकालक्षणं यथा—"अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचना" इति ।

(प) रे रे शङ्करेति । यौवनारम्भे च यो गर्वः बलदर्पः तेन सम्भृतौ पूर्णौ दुर्विषहौ असह्यैः सोढुमशक्यौ यौ अमर्षरोषौ ईर्ष्याक्रोधौ, तत्र स्थिरक्रोधतात्कालिकक्रोधौ (यथोक्तं

---

(৪৪) ( নেপথ্যে কল কল শব্দ হইতে লাগিল ও সকলে শুনিতে লাগিল )।

(য) ( পুনর্নেপথ্যে ) হে শঙ্করগৃহবাসি-জনগণ ! এই দুষ্ট ব্যাঘ্র যৌবনারম্ভ-গর্বপূর্ণ অসহনীয় ঈর্ষা ও ক্রোধবশতঃ বলপ্রয়োগদ্বারা লৌহপিঞ্জর ভগ্ন ও

---

* "प्रतिबद्धमडलानिरोधनविनष्टसङ्कलित"इदं क्वचित् पाठान्तरम् । लौहपिञ्जरे प्रतिबद्धया शृङ्खलया यो निरोधः तेन यः प्रतिभङ्गः विपरीतभङ्गः तेन समाचिता निर्मिता या निजलीलै-श्वादिदर्पः ।

बुद्ध। महाभाअ! उज्जाण-बाहिरत्था-मुहे। (क)

[ माधवः साटोपं परिक्रामति। ] (४८)

काम। वत्स! अप्रमत्तो भूत्वा विक्रमस्व। (४९)

---

(क) महाभाग! उद्यानबाह्यरथ्यामुखे।

---

स्यात्तथा नद्धो बद्ध इव। निर्भरेण अतिमात्रेण दुग्धस्रोतसा दुग्धाम्भःप्रवाहेण च स्नपितः आप्लुत इव। "दुग्धस्रोतसां निर्झरेणे"ति पाठे तु निर्झरेण प्रवाहेणेत्यर्थः। कृत्स्नः निःशेषः यथा सर्व्वाण्यपि मम अङ्गानीत्यर्थः, कवलितः ग्रस्त इव। तथा सान्द्रेण घनेन अमृतवर्षेण सुधासेकेन प्रसभं बलात् सिक्त इव। अनेन लीलाख्यो दृष्टिव्यापारः प्रदर्शितः। यथोक्तं—"धाराबाहिकसञ्चारो यस्य तल्लीलमुच्यते" इति।

अत्र दुग्धस्रोतसा इत्यनन्तरमेव चकारस्य युक्तत्वात्तत्पूर्वविन्यासेन प्रथमचतुर्थेवशब्दयोः नद्धसिक्तपदयोः पूर्व्वविन्यासेन च "अक्रमता" दोषः।

नद्ध इवेत्यादि क्रियोत्प्रेक्षाचतुष्टयस्य परस्परनैरपेक्ष्येण संसृष्टिरलङ्कारः। मालिनीवृत्तम्।

(क) बुद्धेति। "क्वासा"विति माधवप्रश्नस्योत्तरमाह—महाभागेति। अत्र मालती-माधवयोर्व्वाक्यद्वयस्य स्वगतत्वेन न कथाविच्छेद इति मन्तव्यम्। उद्यानबाह्यरथ्यामुखे उपवनबहिर्व्वर्तिवर्त्मार्ग्रे शार्द्दूलेनाक्रान्ता मदयन्तिका वर्त्तत इत्यर्थः।

(४८) माधव इति। साटोपं सदर्पं परिक्रामति, तत्र गमनाय पादविक्षेपं करोति।

(४९) कामेति। अप्रमत्तः अनवधानतारहितः सावहित इति यावत्। विक्रमस्व मदयन्तिकारक्षार्थं विक्रमप्रकाशाय उत्सहस्व। "वृत्तिसर्गतायनेषु क्रम" इति वचनादित्वा-दात्मनेपदम्।

---

মালাদ্বারা আমাকে গাঢ়ভাবে আবদ্ধ করিতেছে। অতিমাত্রদুগ্ধস্রোতোদ্বারা যেন আমাকে আপ্লুত করিতেছে ও আমার সর্ব্বাঙ্গ যেন গ্রাস করিতেছে। এবং গাঢ় অমৃতবর্ষণদ্বারা যেন আমাকে সবলে সিক্ত করিতেছে।

(ক) বুদ্ধ। মহাভাগ! উদ্যানবাহ্য পথের মুখে (মদয়ন্তিকা আক্রান্ত হইয়াছে)।

(৪৮) (মাধব সদর্পে পাদবিক্ষেপ করিতে লাগিলেন)।

(৪৯) কাম। বৎস! সাবহিত হইয়া বিক্রম প্রদর্শন কর।

माल। [ जनान्तिकं। ] लवङ्गिए! हद्धी! हद्धी! संभमो क्खु जादो। (ख) [ सर्वास्त्वरितं परिक्रामन्ति। ] (५०)

माध। [ अग्रे दृष्ट्वा सबीभत्सं। ] अहह! (५१)

संसक्तत्रुटितविवर्त्तितान्त्रजाल-
व्याकीर्णस्फुरदपवृत्तरुण्डखण्डः।
कीलालव्यतिकरगुल्फदघ्नपङ्कः
प्राचण्ड्यं वहति नखायुधस्य मार्गः॥ (५२)

अहो प्रमादः। (५३)

वयं वत विदूरतः क्रमगता पशोः कन्यका (५४)

सर्वाः। हा मदअन्तिए! (ग)

[ कामन्दकीमाधवौ सहर्षाकूतं। ] (५५)

कथं तदभिपातितादधिगतायुधः पूरुषात्।

कुतोऽपि मकरन्द एत्य सहसैव मध्ये स्थितः॥ (५६)

---

(ग) हा मदयन्तिके।

---

(५३) अहो इति। प्रमादः अनवधानता रक्षिपुरुषाणामिति शेषः, यत एतादृग्विपद्यपि ते उदासत इति भावः।

(५४) मदयन्तिका विपदः प्रतीकारासामर्थ्यं दर्शयति—वयमिति। वयं विदूरतः दूरवर्त्तिनि देशे वर्त्तामहे इति शेषः, कन्यका मदयन्तिका पशोः शार्द्दूलस्य क्रमं पादविक्षेपं गता प्राप्ता, एकमात्रपादविक्षेपलभ्यस्थाने वर्त्तते इत्यर्थः। तथाचास्मदागमनात् पूर्वमेव मदयन्तिका शार्द्दूलकवलगता भवेदित्यस्या इयं विपत्तिरस्मत्प्रतिकारसाध्येति भावः।

(ग) सर्व्वा इति। अत्र हाशब्द आत्मीयजनविपत्तिद्योतकः।

(५५) कामिति। उपयुक्तरक्षकोपस्थित्या मदयन्तिकाया रक्षासम्भावनादुभयोर्हर्षः। आकूतमभिप्रायः। तथाहि मकरन्दो यदि मदयन्तिकां रक्षितुं शक्नुयात्तदा तस्यातीव शूरत्वमुद्‌घोष्यत इति माधवस्याभिप्रायः। प्राणदानेन कृतज्ञाया मदयन्तिकाया मकरन्देन सह संयोजनं अनायाससाध्यं भवेदिति च कामन्दक्या अभिप्रायः। दर्शितहर्षाकूताभ्यां सह यथा स्यात्तथा कथयत इति शेषः।

(५६) कथमिति। अत्र कथंशब्दो हर्षे। "कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे

---

দেহগুলি (লুণ্ঠিত হইতেছে এবং শোণিতসম্পর্কে গুল্ফপরিমাণ কর্দ্দম হইয়াছে। সুতরাং এইপথ অতি ভীষণ ভাব ধারণ করিয়াছে।

(৫৩) অহো নগররক্ষকদিগের কি অনবধানতা (যে হেতু তাহারা এখনও নিশ্চেষ্ট আছে)

(৫৪) আমরা এখনও দূরে আছি, মদয়ন্তিকা প্রায় ব্যাঘ্রের আক্রমণগতা, (সুতরাং আমাদ্বারা রক্ষা অসম্ভব)

(গ) সকলে হা! মদয়ন্তিকে!!

(৫৫-৫৬) কামন্দকী ও মাধব। (হর্ষ ও অভিপ্রায়ের সহিত) একি এই ব্যাঘ্র-

इतराः । साहु, महाभाअ ! साहु । (घ)

कामन्दकीमाधवौ । [ सभयं ]—दृढ़ञ्च पशुना हतः ( ५७ )

इतराः । अच्चाहिदं ! अच्चाहिदं ! ( ङ )

कामन्दकीमाधवौ । [ सहर्षं । ]—प्रमथितश्च दंष्ट्रायुधः ॥ (५८)

---

( घ ) साधु महाभाग ! साधु !

( ङ ) अत्याहितमत्याहितम् ।

---

पि सम्भावनायाञ्चे"ति मेदिनी । तेन शार्दूलेन अभिपातितात् विनाशितात् पुरुषात् काचित् तायुधात् इत्यर्थः, अधिगतं आहृत्य लब्धं आयुधं असियेन तथाभूतो मकरन्दः तोऽपि अज्ञातविदितादेव स्थानात् एत्य आगत्य सहसैव स्वकीयजीवनचिन्तनविलम्बनमपि व नध्ये अन्तराले मदयन्तिकाशार्दूलयोरिति शेषः, स्थितः मदयन्तिकारक्षणार्थं शार्दूलनिधनायेति भावः ।

( घ ) इतरा इति । साधु साधु इति हर्षे द्विरुक्तिः । कृतमिति शेषः ।

( ५७ ) कामेति । पशुना शार्दूलेन दृढ़ं तीव्रं यथा स्यात्तथा क्षतः—नखैः प्रहृतः मकरन्द इत्यर्थः ।

(ङ) इतरा इति । अत्याहितं महद्भयं अनेन शार्दूलकृतप्रहारेणोपस्थापितमिति शेषः ।

(५८) कामेति । दंष्ट्रा दन्ताः आयुधं प्रहरणं यस्य स दंष्ट्रायुधः शार्दूलश्च प्रमथितः तत्क्षणादेवासिप्रहारेण निहतः मकरन्देनेति शेषः । "व्यसुरसौ कृतश्चासुने"ति कचित् पाठः, अमुना मकरन्देन असौ व्याघ्रः व्यसुः विगतप्राणः कृत इति तदर्थः ।

अत्र पान्तरालतरा जनान्तरवाक्यान्तरव्यवधानेऽपि—५४—५६—५७—५८ अङ्कचिह्नितार्ध-एक एव श्लोकः । अस्य च मदने पाठे व्याघ्ररूपपशुविशेषे मदयन्तिकारूपकन्याविशेषे च

---

कर्तृकই আহত কোন এক পুরুষের অসি গ্রহণ করিয়া মকরন্দ সহসা কোথা হইতে মদয়ন্তিকা ও ব্যাঘ্রের মধ্যবর্ত্তী হইল ?

(ঘ) সকলে। সাধু মহাভাগ ! সাধু। ( তুমি ভালই করিয়াছ)।

( ৫৭ ) কামন্দকী ও মাধব। ( সভয়ে ) মকরন্দ শার্দ্দূলকর্তৃক দৃঢ়রূপে আহত হইয়াছে।

( ঙ ) অপর সকলে। সর্ব্বনাশ সর্ব্বনাশ !

( ৫৮ ) কামন্দকী ও মাধব। ( সহর্ষে ) দংষ্ট্রায়ুধ ( ব্যাঘ্র ) মকরন্দকর্ত্তৃক নিহত হইয়াছে।

इतरा: । [ सानन्दं । ] दिट्ठिया परिहदं दुज्जादं (च)

काम । [ साकूतं । ] कथं व्यालनखरप्रहारनि:सृतरक्तप्रवाह:, क्षितितलनिपन्नखड्गलतावष्टम्भनिश्चल:, संभ्रान्तमदयन्तिकावलम्बित: ताम्यतीव वत्सो मे मकरन्द: । (५८)

---

( च ) दिष्ट्या प्रतिहतं दुर्जातम् ।

---

वक्तव्ये पशुकन्यकयो: सामान्ययोरुपादानात्, द्वितीये असिरूपायुधविशेषे वक्तव्ये अधिगतायुधमिति सामान्योपादानात्, चतुर्थेऽपि व्याघ्ररूपपशुविशेषे वक्तव्ये पशुनेति सामान्यत उपादानाच्च चत्वारो विशेषे अविशेषाख्यदोषा:, एवं प्रथमे पादे भेदशोधककिन्त्वादिशब्दस्य वक्तव्यत्वेऽपि तदनभिधानादवाच्यानभिधानतादोष:, तथा तृतीयपादे अष्टमाक्षरे पृथ्वीवृत्तनियतस्य पदच्छेदस्याभावेन यतिभङ्गदोषश्च । यतिभङ्गस्य दोषत्वमुक्तम् । यथा काव्यादर्शे—

> "श्लोकेषु नियतस्थानं पदच्छेदं यतिं विदु: ।
> तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा ॥"

पृथ्वीवृत्तम् । "जसौ जसयला वसुग्रहयतिश्च पृथ्वीगुरु"रिति तल्लक्षणम् ।

( च ) इतरा इति । दुर्जातं व्यसनं "दुर्जातं व्यसने क्लीवमसम्यग्जातवस्तुनी"ति केशव: । दिष्ट्या भाग्येन प्रतिहतं नाशितं मकरन्देन शार्दूलस्य वधादिति शेष: ।

(५९) कामेति । साकूतं आकूतेन "मदयन्तिकामकरन्दयोर्हि वमम्पर्कोऽयं परस्परसंस्पर्श एवोत्तरोत्तरानुरागसंवर्द्धको भविष्यती"त्यभिप्रायेण सह यथा स्यात्तथा । कथमिति सम्भ्रमे । व्यालस्य हिंस्रपशो: "अर्थव्यवसहे व्यालस्तथा हिंस्रपशौ स्मृत" इति हलायुध: । शार्दूलस्येत्यर्थ:, नखरप्रहारेण नखाघातेन निसृत: निर्गत: रक्तप्रवाहो यस्य स:, क्षितितले निपन्ना संलग्नैककोटि: या खड्गलता तस्या अवष्टम्भेन अवलम्बनेन निश्चलो निष्पन्द:, तथा सम्भ्रान्तया समतित्वरान्वितया मदयन्तिकया अवलम्बित: पतनभयाद्धृत: मे मम वत्स: अतिस्नेहास्पद: मकरन्द: ताम्यतीव मुह्यतीव ।

---

( চ ) অন্য সকলে। ভাগ্যক্রমে এই ব্যসন বিনাশিত হইল।

( ৫৯ ) কাম। ( সাভিপ্রায়ে ) শার্দ্দূলের নখপ্রহারে মকরন্দের গাত্র হইতে রক্তপ্রবাহ নির্গত হইতেছে। ক্ষিতিতলসংলগ্ন খড়্গলতা অবলম্বন করিয়া বৎস মকরন্দ একেবারে নিস্পন্দ হইয়া পড়িয়াছে ও পড়িয়া যাওয়ার আশঙ্কায় অতি-

इति परिक्रम्य निष्क्रान्ताः सर्वे। (६२)

## इति मालतीमाधवे शार्दूलविद्रावणो नाम तृतीयोऽङ्कः (६३)

---

(६२) सर्व्वे माधवादयः। (क्वचित् पुस्तके एतदंशो नास्ति।)

(६३) इतीति। शार्द्दूलस्य विद्रावणं विनाशो यत्र सः। शार्द्दूलविद्रावणस्यैवात्र प्रधानतः उल्लेखयोग्यत्वात्तथात्वेनाङ्कतनित्यनुसन्धेयम्।

इति काव्यतर्कतीर्थोपनामक-श्रीकुञ्जविहारितर्कसिद्धान्तभट्टाचार्य्यकृतायां तत्त्वबोधिनी-समाख्यायां मालतीमाधवव्याख्यायां तृतीयाङ्कविवृतिः समाप्ता॥

---

( ৬২ ) পাদবিক্ষেপপূর্ব্বক সকলের প্রস্থান।

মালতীমাধবের শার্দ্দূলবিদ্রাবণনামক তৃতীয় অঙ্ক সমাপ্ত।

---

कामन्दकी। [उभौ कमण्डलूदकेन सिक्त्वा।] ननु भवत्यः पटाञ्चलेन वत्सौ वीजयन्तु। (२)

[मालत्यादयस्तथा कुर्वन्ति। (३)]

मक। [समाश्वस्यावलोक्य च।] वयस्य! कातरोऽसि, किमेतत्, ननु स्वस्थ एवास्मि। (४)

मद। [सहर्षं।] अम्महे! परिबुद्धं दाणिं मअरन्दपुण्णिमाचन्देन (ग)।

माल। [माधवस्य ललाटे हस्तं दत्त्वा।] महाभाअ! दिट्ठिआ वड्ढसि, णं भणामि, पडिवण्णचेअणो महाभाओत्ति (घ)

---

(ग) अहो! प्रतिबुद्धमिदानीं मकरन्दपूर्णिमाचन्द्रेण।

(घ) महाभाग! दिष्ट्या वर्द्धसे ननु भणामि प्रतिपन्नचेतनो महाभाग इति।

---

(२) कामेति। पटाञ्चलेन वस्त्रप्रान्तभागेन।

(३) तथा—पटाञ्चलेन वीजनम्।

(४) मालेति। वयस्येति माधवामन्त्रणम्। एतत् कातर्य्यं किम् किमर्थम्? निजार्थे नन्विति, स्वस्मिन् स्वभावे तिष्ठतीति स्वस्थः प्रकृतिस्थः एवास्मि अहमिति शेषः। तथाच मत्कृते कातर्य्येणालमिति भावः।

(ग) मदेति। मकरन्द एव पूर्णिमाचन्द्रस्तेन प्रतिबुद्धं चैतन्यमाप्तम्। निरतिशयनयनाह्लादकरत्वान्मकरन्दे पूर्णिमाचन्द्रत्वारोपस्तेन च महाननुरागो व्यज्यते।

(घ) मालेति। मूर्च्छापनोदनस्य शीतक्रियासाध्यत्वात्तदर्थमेव माधवललाटे हस्तार्पणम्। नन्वित्यवधारणे। चेतनशब्दस्यात्र भावप्रधाननिर्द्देशत्वात् प्रतिपन्नचेतनः प्राप्तचैतन्य इत्यर्थः, महाभागो मकरन्दः। यस्य मूर्च्छादर्शनेन जीवनाशङ्कया मे हृतत्वमसि मूर्च्छितोऽसि स मकरन्द

---

(२) काम। (মকরন্দ ও মাধবকে কমণ্ডলুজলে সিক্ত করিয়া) তোমরা বৎস দুইটিকে বস্ত্রাঞ্চলদ্বারা বাতাস দেও।

(৩) (মালতী প্রভৃতি বাতাস করিতে লাগিল)

(৪) মক। (আশ্বস্ত হইয়া ও দেখিয়া) বয়স্য! কাতর হইয়াছ, তোমার এ কাতরতা কেন? আমি ত সুস্থই আছি।

(গ) মদ। (সহর্ষে) অহো! মকরন্দরূপ পূর্ণিমাচন্দ্র চৈতন্যলাভ করিয়াছে!

(ঘ) মাল। (মাধবের মস্তকে হস্তার্পণ করিয়া) মহাভাগ! ভাগ্যক্রমেই

[ इति मकरन्दमेव सस्पृहमवलोकयति। (८) ]

काम। [स्वगतम्] रमणीयोर्ज्जितं हि मदयन्तिकामकरन्दयोर्दैवादद्य दर्शनम्। [प्रकाशम्] वत्स मकरन्द! कथं पुनरायुष्मान् अस्मिन्नवसरे मदयन्तिकाजीवितपरित्राणहेतोर्भवता दैवेन सन्निधापितः (९)।

मक। अद्याहमन्तर्नगर एव काञ्चिद्वार्त्तामुपश्रुत्य माधवस्य चित्तोद्वेगमधिकमाशङ्कमानस्त्वरितमवलोकितानिवेदितकुसुमाकरोद्यानवृत्तान्तः परापतन्नेव शार्दूलावस्कन्दगोचरगतामेवमभिजात-कन्यकामभ्युपपन्नवानस्मि (१०)।

---

(८) सस्पृहं स्पृहया निरतिशयाभिलाषेण सह वर्त्तमानं यथा स्यात्तथा अवलोकयति पश्यति। मदयन्तिका सानुरागं पुनर्मकरन्दस्यैव दर्शनं नाटयतीत्यर्थः।

(९) कामेति। रमणीयं सम्भ्रमसमस्तगात्रसंवृततया सुस्पष्टं परस्पराङ्गसौष्ठव-ग्राहित्वात्, साध्वसव्यपदेशेन गाढालिङ्गनसुखानुबन्धित्वात् विपत्तिस्तारकतया चैनाव्यनामद्भनीय-त्वाच्च मनोहरं, ऊर्जितं शार्दूलनिराकृतत्वेन मनःप्रकाशकं (परपदस्य विशिष्टत्वविवक्षया-ऽनयोः कर्मधारयः।) ईदृशं दर्शनं परस्परसाक्षात्कारः दैवात् नितान्तानुकूलविधिनियोग-वशादेव सम्पन्नमिति शेषः। अकस्मादित्यक्षमदर्शनस्य सर्वदैवासम्पादनीयत्वादिति भावः। आयुष्मान् दीर्घायुष्क ("आयुष्मानिति ज्येष्ठे न वाच्यो बालः शुभाशय" इति भरतः)। कथं केन प्रकारेण, अस्मिन्नवसरे एतच्छार्दूलाक्रमणसमये। मदयन्तिकाजीवितत्राणहेतोः मदयन्ति-कायाः जीवनरक्षार्थं। सन्निधापितः समीपवर्त्तीकृतः।

(१०) मकेति। अन्तर्नगर एव नगरमध्य एव। काञ्चिद्वार्त्तां माधवस्यैव मदर्थं

---

सम्भवপর হয় না। (মাধবকে দেখিয়া)! এই মহানুভবে মালতীর অনুরাগ-স্থিরবর্ত্তীও সর্ব্বথা উপযুক্ত হইয়াছে।

(৮) (পুনরায় মকরন্দকেই সস্পৃহলোচনে দেখিতে লাগিল।)

(৯) কাম। (স্বগতঃ) অতি মনোহর ও বলপ্রকাশক এই মদয়ন্তিকা-মকরন্দের পরস্পরদর্শন দৈববশতঃই অদ্য সম্পন্ন হইয়াছে। (প্রকাশে) বৎস মকরন্দ! এই শার্দ্দূলাক্রমণাবসরে মদয়ন্তিকার জীবনরক্ষার্থ কি প্রকারে ভগবান্ দীর্ঘায়ুষ্ক তোমাকে সন্নিহিত করিলেন?

(১০) মক। আজ আমি এই নগরমধ্যেই কোন একটী বৃত্তান্ত শুনিয়া

[ मालतीमाधवौ विस्मृशतः। (११)]

काम। [ स्वगतम् ]। वृत्तान्तेन खलु मालतीप्रदानेन भवितव्यम्। [ प्रकाशम् ]। वत्स माधव! दिष्ट्या सुहृदनुज्ञया वर्धितोऽसि मालत्या तदयमवसरः प्रीतिदानस्य।

माध। भगवति! इयं हि—

---

कश्चिद् वृत्तान्तम्। अधिकं गडुमान इति लोकपरम्परया तद्वार्त्ताश्रवणस्यावश्यम्भावादिति भावः। अवलोकितया निवेदितः कुसुमाकरोद्यानस्य वृत्तान्तः मालतीमाधवसन्निधानादिरूपः। एवं ताडशोऽयं त्वरितं मत्तरं परापतन्नेव आगच्छन्नेव शार्दूलावस्कन्दभीत्यरगतां व्याघ्राक्रमणविपन्नता-मापन्नां अभिजातकन्यकां सीमन्तसिन्दूरादिवियुक्ताकृतिविशेषानुमितकुलीनकुमारीभावां ("अभिजातः कुलीने स्यान्न्याय्यपण्डितयोरपि" इति मेदिनी) अभ्युपपन्नवान् उपगतवानसि।

(११) मालतीति। विस्मृशतः—का मा वा इति चिन्तयतः, निस्पन्दनयनत्वादिना तत्राचेतना-मभिनयत इति यावत्। माधवार्पितचित्तत्वेन समसुखदुःखभागितया माधवीव तादृशावस्था-पन्नौ मालत्या अपि भावना कृतेति मन्तव्यम्।

(१२) कामेति। मालतीप्रदानेन नन्दनाय मालतीदानसंश्लिष्टेन, भवितव्यमिति तावत् [illegible] एवमपि तथैव श्रुतत्वादेवमनुमानमिति भावः। सुहृदनुज्ञया वन्धुजनेन, वर्धितोऽसि [illegible] चेतनाकृतोऽसि। तदयमत् प्रीतिदानस्य पारितोषिक-दानस्य एवं अवसरः प्रस्तावः, अधुना। तद्योग्यतामात्र भावः।

---

[illegible]

(११) [illegible]

यद्व्यालव्रणितसुहृत्प्रमोहमुग्धम्
कारुण्यात् विहितवती गतव्यथं माम् ।
तत्कामं प्रभवति पूर्णपात्रवृत्त्या
स्वीकर्तुं मम हृदयञ्च जीवितञ्च ॥ (१२)

लव । पडिच्छिदो क्खु णो पिअसहीए अअं पसादो (ञ)

(ञ) प्रतीष्टः खलु नः प्रियसख्या अयं प्रसादः ।

(१२) यदिति । इयं हि एषैव मालती यद्यस्मात् व्यालेन हिंस्रजन्तुना व्याघ्रेणेत्यर्थः, व्रणितस्य (व्रणः सञ्जातोऽस्येति तारकादित्वादितच्,) विक्षतशरीरस्य सुहृदः प्रियस्य मकरन्दस्य प्रमोहेन मूर्च्छया मूर्च्छादर्शनजनितमोहविकारैरित्यर्थः, मुग्धं मूर्च्छितं मां गतव्यथं हस्तस्पर्शादिना "पडिवन्नचेदणो महाभाओ" इत्याद्यभिधानेन च प्रकृतिस्थं विहितवती कृतवती । तत् तस्मात् कामं यथेच्छं मदनुमतिं विनापीत्यर्थः, पूर्णपात्रस्य "हर्षोत्सवकाले यदलङ्कारांशुकादिकम् । आकृष्य गृह्यते पूर्णपात्रं पूर्णानकञ्च तत्" इति जटाधरव्याख्यातस्य प्रियनिवेदकेन बलादाकृष्य गृह्यमाणस्य वस्त्रालङ्कारादिकस्य वृत्त्या प्रकारेण मम हृदयञ्च जीवितञ्च स्वीकर्तुं ग्रहीतुं प्रभवति शक्नोति । यच्च मालत्यै दानयोग्यं मम हृदयं जीवितञ्च अथ प्रादिपरिहरणैव मालत्या पूर्वमेव तयोः स्वायत्तीकृतत्वात्तदर्पितकर्तव्यत्वाभावेन विनिरानीतमदं हालानीति भावः । प्रकटीकरणत्वादिह मल्लकं नाम प्रतिमुखसन्धेरङ्गम् । "मल्लकं ग्राम्यस्मादुपरोधन"मिति लक्षणात् ।

एव हिंसविरहे शार्दूले वन्यजन्तौ तानादिहिंसावच्छ्यानुवर्तीनादानात् विशेषाविशेषाख्यशेषः । पूर्णपात्रवृत्त्येति आर्थी उपमालङ्कारः । प्रहर्षिणी वृत्तम् ॥

(ञ) लवेति । नः प्रियसख्या मालत्या अयं प्रसादः तव अनुग्रहः प्रतीष्टः स्वीकृतः ।

(১৩) মাধ । ভগবতি ! যেহেতু এই মালতী সৌভাগ্যবশতঃ ব্যাঘ্রকর্তৃক বিক্ষতশরীর প্রিয়সুহৃৎ মকরন্দের মূর্চ্ছাদর্শনে মূর্চ্ছিত আমাকে হস্তস্পর্শন ও মকরন্দের চৈতন্যবার্তা দ্বারা প্রকৃতিস্থ করিয়াছে, সেইহেতু পূর্ণপাত্রবৃত্তি প্রকারানুসারে (অর্থাৎ মঙ্গলবার্তাজ্ঞাপক ব্যক্তি যেমন উৎসবকালে বলপূর্বক বস্ত্রালঙ্কারাদি গ্রহণ করিয়া থাকে, সেইরূপ বলপূর্বক) আমার অনুমতি ব্যতিরেকেই আমার হৃদয় ও জীবন গ্রহণ করিবার অধিকারিণী।

(ঞ) লব । আমার প্রিয়সখী মালতী আপনার এই অনুগ্রহ সর্বতো-ভাবে স্বীকার করিলেন।

[ मालतीमाधवौ विमृशतः। (११)]

काम। [स्वगतम्]। वृत्तान्तेन खलु मालतीप्रदानेन भवितव्यम्। [प्रकाशम्]। वत्स माधव! दिष्ट्या सुहृद्बुद्ध्या वर्द्धितोऽसि मालत्या तदयमवसरः प्रीतिदानस्य।

माध। भगवति! इयं हि—

---

कश्चिद् वृत्तान्तम्। अधिकं गच्छमान इति लोकपरम्परया तद्वार्त्ताश्रवणस्यावश्यम्भावादिति भावः। अवलोकितया निवेदितः कुसुमाकरोद्यानस्य वृत्तान्तः मालतीमाधवसन्निधानादिवार्त्ता यस्यै तादृशोऽहं त्वरितं सत्वरं परापतन्नेव आगच्छन्नेव शार्दूलावस्कन्दगोचरगतां व्याघ्राक्रमणविषयताआपन्नां अभिजातकन्यकां सीमन्तसिन्दूरादिवियुक्ताकृतिविशेषानुमितकुलीनकुमारीभावां ("अभिजातः कुलीने स्यान्न्याय्यपण्डितयोस्त्रिषु" इति मेदिनी) अभ्युपपन्नवान् उपगतवानस्मि।

(११) मालतीति। विमृशतः—का सा वार्त्तेति चिन्तयतः, निस्पन्दनयनत्वादिना तद्भावनाअभिनयत इति यावत्। माधवार्पितचित्तत्वेन समसुखदुःखभागितया माधवीयोद्वेगसंवलितभावतो मालत्या अपि भावना युक्तैवेति मन्तव्यम्।

(१२) कामेति। मालतीप्रदानेन नन्दनाय मालतीदानसम्बन्धेन, भवितव्यमिति तावदेव माधवोद्वेगसम्भवात् त्वयमपि तथैव श्रुतत्वादेवमनुमानमिति भावः। सुहृद्बुद्ध्या बन्धुभावेन, वर्द्धितोऽसि मत्कृते चन्दनसंवाहनादिना चेतनीकृतोऽसि। तस्मात् प्रीतिदानस्य पारितोषिकदानस्य अयं अवसरः अवकाशः, अधुनैव तद्दीयतामिति भावः।

---

মাধবের চিত্তোদ্বেগবৃদ্ধির আকাঙ্ক্ষা করিত, অবলোকিতার নিকট কুসুমাকরোদ্যানবৃত্তান্ত অবগত হইয়া অতি দ্রুতপদে তথায় যাইতে যাইতেই (পথে) শার্দ্দূলকবলগত এই কুলীন-কন্যার কাছে আসিয়া পড়িয়াছিলাম।

(১১) (মালতী ও মাধব "সেই কথাটি কি?" তাহার চিন্তাভিনয় করিতে লাগিলেন)।

(১২) কাম। (স্বগত) বৃত্তান্তটি নন্দনে মালতী প্রদান সম্বন্ধেই হইবে। (প্রকাশ্যে) বৎস মাধব! ভাগ্যক্রমে বন্ধুভাবে মালতী তোমাকে বর্দ্ধিত করিয়াছে, অতএব প্রীতিদানের এই অবসর।

मद। [स्वगतम्] जाणादि महाभाअधेओ जणो अवसरे गुरुअरमणिज्जं मन्तिदुम् (ट)।

माल। [स्वगतम्।] किं णाम मअरन्देण उव्वेअकारणं सुदं भविस्सदि? (ठ)।

माध। वयस्य! का पुनर्ममाधिकोद्वेगहेतुर्वार्त्ता? (१४)

[प्रविश्य पुरुषः।] वत्से मदयन्तिके! भ्राता ते ज्यायान् अमात्यनन्दनः समादिशति, "अद्य परमेश्वरेण अस्मद्भवनमागत्य, भूरिवसो-

---

(ट) जानाति महाभागधेयो जनोऽवसरे गुरुकरमणीयं मन्त्रयितुम्।

(ठ) किं नाम मकरन्देन उद्वेगकारणं श्रुतं भविष्यति।

---

तव हृदयजीवितयोर्मालत्यधीनत्वे नान्यत् किमपि मालत्या प्रार्थनीयमिति भावः। गुरुजनसन्निधौ स्वयमभिधाने मालत्या धृष्टता स्यादिति मालतीहृद्गतं लवङ्गिकयेदमभिहितमिति मन्तव्यम्।

(ट) मदेति। महाभागधेयः परमसौभाग्यशाली जनः, अवसरे उपयुक्तकाले, गुरुकरमणीयं वाञ्छितार्थसूचकत्वे नातिमनोहरं, मन्त्रयितुं अभिधातुम्। तथाच यथावसरमुपयुक्तमेवेदमुत्तरं माधवेन दत्तमिति भावः।

(ठ) मालेति। उद्वेगकारणमिति माधवस्येति शेषः।

(१४) माधेति। "काचिद्वार्त्तानुपस्तुते"ति यन्मकरन्देनाभिहितं तां वार्त्तां पुनः पृच्छति—का पुनरिति।

(१५) प्रविश्येति। पुरुषः कश्चित् कथयतीति शेषः। ज्यायान् ज्येष्ठः। परमेश्वरेण अप्रतिहतेच्छत्वात् परमेश्वरतुल्येन महाराजेनेत्यर्थः। तथाच तद्वचनेन कदापि नान्यथा

---

(ট) মদ। (স্বগত) পরম সৌভাগ্যশালী ব্যক্তিগণ উপযুক্ত অবসর বুঝিয়াই অতি রমণীয় কথা বলিতে জানেন।

(ঠ) মাল। (স্বগত) মকরন্দ (মাধবের) কি উদ্বেগের কারণ শুনিলেন?

(১৪) মাধ। বয়স্য! আমার অধিক উদ্বেগের হেতুজনক সংবাদটি কি? (যাহা শুনিয়া তুমি সত্বর আসিয়াছ?)

(১৫) কোন একটি পুরুষ। (প্রবেশ করিয়া) বৎসে! মদয়ন্তিকে,

उपरि परं विश्वासमस्मासु च प्रसादमाविष्कुर्वता, स्वयमेव प्रतिपादिता मालती, तदेहि सम्भावयामः प्रमोद"मिति। (१५)

मक। वयस्य! सेयं वार्त्ता। (१६)

[ मालतीमाधवौ वैवर्ण्यं नाटयतः। (१७) ]

मद। [ मालतीं सहर्षमालिङ्ग्य। ] सहि मालदि! तुमं क्खु

---

भवितव्यमिति सूचितम्। भूरिवसौ मालत्याः पितरि परं निरतिशयं विश्वासं "भूरिवसुः कदमपि मद्वचनमुल्लङ्घयितुं न शक्नुया"दिति विस्रम्भम्। कथमन्यथा राज्ञा प्रतिपादनेऽपि निःसंशयः स्यादिति भावः। प्रसादं अनुग्रहम्। आविष्कुर्वता प्रकटयता। अत्र च विश्वासाविष्करणं भूरिवसोरधीनत्वाभिन्नहृदयत्वादिप्रतिपादनेन, प्रसादाविष्करणञ्चैतदर्थं नन्दनगृहगमनादिनेति मन्तव्यम्। प्रतिपादिता दत्ता दातुं प्रतिश्रुतेति यावत्। प्रमोदं आनन्दं सम्भावयामः माङ्गलिकक्रियाभिः सम्पादयामः। "प्रसाद"मिति पाठे प्रसादं तदनुग्रहं सम्भावयामः उत्सवादिभिः बहु मन्यामहे इत्यर्थः।

(१६) मकेति। इयं प्रविष्टपुरुषेण कथिता नन्दनाय मालतीप्रतिपादनरूपा वार्त्ता सा तवाधिकोद्वेगहेतुत्वेन मया कल्पितेत्यर्थः, इमामेवोपश्रुत्य त्वरितमहमागत इति भावः।

(१७) मालेति। वैवर्ण्यं अप्रतिविधेयोक्तविपत्पातजनिततापहेतुकं मालिन्यादिरूपं विवर्णभावम्। तथाचोक्तं—"वैवर्ण्यं वर्णभेदः स्यात्तापमङ्गामयादिभि"रिति।

---

তোমার জ্যেষ্ঠ ভ্রাতা অমাত্যনন্দন আদেশ করিয়াছেন, "অদ্য মহারাজ স্বয়ং আমাদের ভবনে আসিয়া ভূরিবসুর উপরে পরম বিশ্বাস ও আমার উপর অনুগ্রহ প্রকটন করতঃ মালতীপ্রদানে প্রতিশ্রুত হইয়াছেন, সুতরাং এস আমরা আনন্দানুষ্ঠান করি"।

(১৬) মক। বয়স্য! এই পুরুষ যাহা বলিল, সেই মালতীর নন্দনার্পণ-প্রতিশ্রুতিবার্ত্তাই তোমার অধিক উদ্বেগের কারণ বলিয়া আমি মনে করিয়াছি।

(১৭) (মালতী ও মাধব মনস্তাপজনিত বিবর্ণ ভাব প্রকটন করিতে লাগিল)।

एक्कणअरणिवासेण सहपंसुकोलणादो पहुदि मे पिअसही आबहिणिआ अ, सम्पदं उण णो घरस्स मण्डणं जादासि। (ड)।

काम। वत्से मदयन्तिके! दिष्ट्या वर्द्धसे भ्रातुर्मालतीलाभेन। (१८)

मद। भअवदि! तुम्हाणं आसिसां पहावेण। सहि लवङ्गिए! फलिदा णो मणोरहा तुम्हाणं लाहेण। (ढ)

---

(ड) सखि मालति! त्वं खलु एकनगरनिवासेन सहपांशुक्रीड़नात् प्रभृति मे प्रियसखी आसीर्भगिनिका च, साम्प्रतं पुनरस्माकं गृहस्य मण्डनं जातासि।

(ढ) भगवति! युष्माकमाशीःप्रभावेण। सखि लवङ्गिके! फलिता नो मनोरथा युष्माकं लाभेन।

---

(ड) सहेति। सह पांशुक्रीड़नात् प्रभृति मिलित्वा धूलिखेलात आरभ्य। नः अस्माकं गृहस्य मण्डनं राजानुग्रहजनितसमाजनाभ्यर्थनावासस्य भूषणम्।

(१८) कामेति। सोपहासोक्तिरियम्।

(ढ) सहेति। प्रभावेण माहात्म्येन मालतीलाभो जात इति शेषः। अत्र प्रियोक्तिर्नाम नाट्यलक्षणम्। यथोक्तं दर्पणे—

"स्यात् प्रमाणयितुं पूज्यं प्रियोक्तिर्हर्षभाषण"मिति।

तथा "नो" इत्यस्य अस्माकमितिवत् निषेधार्थकत्वस्यापि सम्भवेन कामन्दक्यादिचातुर्य्यात् युष्माकं लाभेन मनोरथा नो फलिताः सफला न जाता इति भविष्यत्प्रधानार्थान्तरस्यापि सूचनात् पताकास्थानमिदम्। यथोक्तं दर्पणे—

"द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।
प्रधानार्थान्तरापेक्षः पताकास्थानकं पर"मिति॥

---

(ড) মদ (সহর্ষে মালতীকে আলিঙ্গন করিয়া) সখি মালতি! এক নগরে বসতিনিবন্ধন একত্রিত হইয়া ধূলিখেলা হইতে আরম্ভ করিয়াই তুমি আমার প্রিয়সখী ভাগিনী ছিলা, এখন আবার আমাদের গৃহের অলঙ্কারস্বরূপ হইলা।

(১৮) কাম। বৎসে মদয়ন্তিকে! ভাগ্যক্রমেই তোমরা মালতীলাভে বৃদ্ধি লাভ করিলা।

(ঢ) মদ। ভগবতি! আপনাদের আশীর্ব্বাদপ্রভাবেই (এই মালতী লাভ ঘটিল)। লবঙ্গিকে! তোমাদের লাভে আমার মনের অভিলাষ সফল হইল।

लव। सहि! किं अह्माणम्पि अत्थि मन्तिदव्वं (ण)।

मद। सहि बुद्धरक्खिदे! दाणिं विवाहमङ्गलं सम्भाविह्म। (त)

बुद्ध। सहि! एहि गच्छह्म। (थ) [इत्युत्तिष्ठतः।] (१८)

लव। [जनान्तिकम्]। अभवदि! जह्मा एदे हिअअभरिदुव्वित्त-विह्मआणन्द-सुन्दरा-दोलिद-धीरत्तण-मणोहरा, पहुत्यन्ति मदअन्ति-

---

(ण) सखि! किमस्माकमप्यस्ति मन्त्रयितव्यम्।

(त) सखि बुद्धरक्षिते! इदानीं विवाहमहोत्सवं सम्भावयावः।

(थ) सखि! एहि गच्छावः।

---

"युष्माक"मिति बहुवचनन्तु मालतीस्थाने तत्परिजनस्यापि अवस्थानसम्भवादुपात्तमिति मन्तव्यम्।

(ण) लवेति। अस्माकमपि मन्त्रयितव्यं अस्मिन् विषये वक्तव्यं किमस्ति न किञ्चिदपीत्यर्थः। युष्माभिर्लब्धत्वादस्माकमपि मनोरथसिद्धिर्जातेति भावः। इयमपि परिहासोक्तिः। अत्र च "अस्माकमन्यं तन्मन्त्रयितव्य"मित्यर्थकमस्ति पाठान्तरम्, तदाले च एतत्—"फलिता नो मनोरथा युष्माकं लाभेने"ति वाक्यं अस्माकमपि वक्तव्यमित्यर्थः। परन्तु युष्माकं सपरिजनाया भवत्या लाभेन भाविना मकरन्दप्राप्तिरूपेण अस्माकं मनोरथाः सफला भवितार इत्येतदस्माकं मन्त्रयितव्यमित्यर्थोऽपि सूच्यत इति ध्येयम्।

(त) मदेति। विवाहमहोत्सवं मालतीमाधवयोर्विवाहस्य प्रमोदं, सम्भावयामः यथोचितानुष्ठानेन सम्पादयामः। अत्र "उद्यमो" नाम नाट्यालङ्कारः। यदुक्तं दर्पणे—"कार्य्यस्यारम्भ उद्यम" इति।

(१८) उत्तिष्ठत इति मदयन्तिकाबुद्धरक्षिते इति शेषः।

(द) लवेति। हृदये निहिते भरिताभ्यां आदौ पूर्णाभ्यां पश्चात् उद्वृत्ताभ्यां हृदये स्थाना-

---

(ণ) লব। সখি! এবিষয়ে আমাদেরই আর কি বক্তব্য আছে?

(ত) মদ। সখি! বুদ্ধরক্ষিতে! এখন যথোচিত অনুষ্ঠানে বিবাহমহোৎসব সম্পন্ন করিব।

(থ) বুদ্ধ। সখি! এস আমরা যাই। ১৮ (মদয়ন্তিকা ও বুদ্ধরক্ষিতা উঠিল)।

आमअरन्दाणं दरदलिदणीलुप्पलदामसरिच्छा कडक्खविक्खेवा तह तक्केमि मणोरहणिव्वुत्तसम्बन्धा एदेत्ति। (द)

काम। [ विहस्य। ] ननु इमौ विलोकनेन मानसं मुहुर्मुहुः प्रमोदमनुभवतः। (२०) तथाहि—

---

(द) भगवति! यथैते हृदयभरितोद्वृत्तविस्मयानन्दसुन्दरान्दोलितधीरत्वमनोहराः परिवर्त्तन्ते मदयन्तिकामकरन्दयोर्दरदलितनीलोत्पलदामसदृशाः कटाक्षविक्षेपाः तथा तर्कयामि मनोरथनिर्वृत्तसम्बन्धावेताविति।

---

भावाद्वहिर्भूताभ्यां विस्मयानन्दाभ्यां सुन्दरं यथा स्यात्तथा आन्दोलिताः सञ्चालिताः तथा धीरत्वेन आकारगोपनार्थमवलम्बितधैर्य्येण मनोहराः सुन्दराः। परस्य विशेष्यत्वविवक्षया उभयोः कर्म्मधारयः। तथा दरविदलितानां ईषद्विकसितानां नीलोत्पलानां यद्दाम माला तत्सदृशाः तत्तुल्याः एते मदयन्तिकामकरन्दयोः कटाक्षविक्षेपाः दृष्टिरम्भेदाः यथा येन प्रकारेण प्रवर्त्तन्ते परस्परं प्रति निपतन्ति, तथा तेन प्रकारेण तर्कयामि अनुमिनोमि मनोरथेन निर्वृत्तः सम्पन्नः सम्बन्धः परस्परसमागमरूपसंसर्गो ययोस्तादृशौ एतौ मदयन्तिकामकरन्दौ इति।

(२०) कामेति। नन्विति लवङ्गिकामन्त्रणे। इमौ मदयन्तिकामकरन्दौ, मानसं प्रमोदं सङ्कल्पनिर्म्मितसम्भोगजनितानन्दं मुहुर्व्वारंवारं विलोकनेन परस्परसन्दर्शनेन अनुभवत इत्यन्वयः। "मानसं मोहन"मिति पाठे तु, मोहनं सुरतं, तथाच कामशास्त्रं—"मोहनं नारभेत्तावत् यावन्नोत्कण्ठिता प्रिया" इति। मानसं प्रमोदमनुभवत इति यदुक्तं हेतूपन्यासेन तद्दृढ़यितुमाह—तथाहीति।

---

(द) लব। (জনান্তিকে) হৃদয়ে পূর্ণ হইয়া স্থানাভাবে বহির্ভূত বিস্ময় এবং আনন্দবশতঃ সুন্দরভাবে সঞ্চালিত ও ধীরতাবশতঃ মনোহর ঈষদ্বিকসিতনীলোৎপলমালার সমতুল এই মদয়ন্তিকা ও মকরন্দের কটাক্ষবিক্ষেপ যেরূপ ভাবে প্রবর্ত্তিত হইতেছে, তাহাতে মনে হয়, মনে মনে ইহাদের পরস্পর সম্বন্ধ সম্পন্ন হইয়াছে।

(২০) কাম। (হাস্য করিয়া) অয়ি লবঙ্গিকে! বার বার পরস্পরাবলোকনদ্বারা ইহারা মনঃকল্পিত সম্ভোগের আনন্দ অনুভব করিতেছে। দেখ—

ईषत्तिर्य्यग्वलनविषमं कूणितप्रान्तमेतत्
प्रेमोद्भेदस्तिमितललितं किञ्चिदाकुञ्चितभ्रु।
अन्तर्मोदानुभवमसृणं स्रस्तनिष्कम्पपक्ष्म
व्यक्तं शंसत्यचिरमनयोर्दृष्टमाकेकराक्षम्॥ * (२१)

---

(२१) ईषदिति। ईषत्तिर्य्यग्वलनेन किञ्चिद्वक्रीभवनेन विषमं वक्रं प्रान्ते अपाङ्गदेशे कूणितमिति कूणितप्रान्तं अपाङ्गदेशे सावज्ञदेव सङ्कुचितमित्यर्थः, राजदन्तादित्वात् परनिपातः। तथा प्रेम्णः अनुरागस्य उद्रेकेण प्रकाशेन क्वचित् स्तिमितं निस्पन्दं क्वचित् ललितं अन्तर्विलासशालं तस्य विशिष्टत्वविवक्षया उभयोः कर्म्मधारयः। किञ्चिदाकुञ्चिता ईषत्कुञ्चन्ती भ्रूर्यत्र तत् किञ्चिदाकुञ्चितभ्रु। अन्तर्मोदस्य मानसिकानन्दस्यानुभवेन मसृणं अनुरागरञ्जितं, तथा स्रस्तानि अवसन्नानि निष्कम्पानि निश्चलानि पक्ष्माणि नेत्रलोमानि यत्र तथाभूतं एतत् प्रथमोन्मिलनाद्यं अनयोः मदयन्तिकामकरन्दयोः आकेकराख्यं वक्ष्यमाणलक्षणलक्षितं दृष्टं परस्परावलोकनं (कर्त्तृ) व्यक्तं स्फुटं यथा स्यात्तथा अचिरं अचिरजातं शंसति मानसिकप्रमोदानुभवं कथयतीत्यर्थः।

अत्र दृष्टस्य पूर्व्वोक्तैकत्रिंशद्भेदेन वक्रादिदर्शनविशेषा दर्शितास्तेषां लक्षणानि यथा—

"वलितो वाङ्गसञ्चारो यत्र तद्वक्रमुच्यते।"
"मानवयस्य सङ्कोचो विकासस्तनयस्य च।
यस्या दृष्टेर्विलक्षेप तद्धि कूणितमुच्यते॥"
"निस्पन्दं तद्भवेद् दृष्टा न स्पन्दते क्वचित्।"
"प्रेमार्द्रमन्तर्विलसत्सारं ललितमुच्यते॥"

---

(২১) কিঞ্চিৎ বক্রভাবে উর্দ্ধসঞ্চালন হেতু বক্র অপাঙ্গদেশের ভাগত্রয়ে সঙ্কুচিত এবং অনুরাগের উদ্রেকবশতঃ কচিৎ নিস্পন্দ, কচিৎ ললিত ও ঈষৎকুঞ্চিত ভ্রূ মানসিকানন্দানুভববশতঃ অনুরাগরঞ্জিত, পরন্তু যাহাতে চক্ষুর পক্ষগুলি অবসন্ন ও নিস্পন্দ তাদৃশ আকেকরাক্ষ এই উভয়ের পরস্পরসন্দর্শন স্পষ্টভাবেই অচিরজাত মানসিকানন্দ উপভোগ ব্যক্ত করিতেছে।

---

* "ईषत्तिर्य्यग्वलितविषमं कूणितप्रान्तमेतत्। प्रेमोद्भेदस्तिमितलुलितं किञ्चिदाकुञ्चितभ्रु। अन्तर्मोदानुभवमसृणं स्रस्तनिष्कम्पपक्ष्म।" क्वचित् पुस्तके पूर्व्वार्द्धे एतादृशः पाठभेदो दृश्यते।

पुरुषः। वत्से! मदयन्तिके! इतः इतः। (२२)

मद। सहि बुद्धरक्खिदे! अवि णाम पुणो वि दाव दीसइ एव जीविदप्पदो पुण्डरीअलोअणो ? (ध)।

बुद्ध। जइ देव्वमणुकूलं भविस्सदित्ति। (न)

[ पुरुषेण निष्क्रान्ते। ] (२३)

माध। [ अपवार्य्य। ]

---

(ध) सखि बुद्धरक्षिते! अपि नाम पुनरपि दृश्यत एव जीवितप्रदः पुण्डरीकलोचनः।

(न) यदि दैवमनुकूलं भविष्यति।

---

"एकस्या एव उत्क्षेपो भ्रुवः कुञ्चनमुच्यते।"

मसृणं तत्तु विज्ञेयमनुरागकषायितं।"

"आकुञ्चितपुटा याऽसक्तार्धनिमीलिता।

मुहुर्व्यावर्त्ततारा च दृष्टिराकेकरा मता॥"

अथान्यथासम्भावितेष्टदर्शनरूपसाधनेन मनःकल्पितसम्भोगजनितानन्दानुभवज्ञानादनुमानालङ्कारः। व्यक्तं शंसति कथयति वेति प्रतीयमानोत्प्रेक्षेति केचित्। शंसतीत्यस्य कर्मपदानुपन्यासात् न्यूनपदत्वदोषः। मन्दाक्रान्ता वृत्तम्।

(२२) पुरुष इति। इत इत इति आगम्यतामिति शेषः।

(ध) मदेति। अपि नामेति सम्भावनायाम्। पुनरपीति औत्सुक्यातिशयद्योतनार्थम्। जीवितप्रदः शार्दूलनिधनेन जीवनदाता। एषः मकरन्दः, नामाग्रहणं भाविपतित्वसम्भावनया।

(न) बुद्धेति। अनुकूलं साहाय्यकारि, भविष्यतीति तदा पुनर्द्रक्ष्यत इति शेषः। अयं ग्रन्थो मदयन्तिकाबुद्धरक्षितयोरालापसमाप्तिद्योतकः।

(२३) पुरुषेण इति सहार्थे तृतीया। निष्क्रान्ते मदयन्तिकाबुद्धरक्षिते इति शेषः।

---

(২২) পুরুষঃ। বৎসে! মদয়ন্তিকে! এদিকে এদিকে।

(ধ) মদ। সখি বুদ্ধরক্ষিতে! পুণ্ডরীকলোচন জীবনদাতা এই মহাপুরুষকে পুনরায়ও কি দেখিতে পাইব?

(ন) বুদ্ধ। যদি দৈব অনুকূল হয় (তবে দেখিতে পাইবে।)

(২৩) (পুরুষের সহিত মদয়ন্তিকা ও বুদ্ধরক্ষিতা নিষ্ক্রান্ত হইল)।

विरादागातन्तु स्तुटतु विसिनीसूत्रभिदुरो,
महानाधिव्याधिर्निरवधिरिदानीं प्रसरतु ।
प्रतिष्ठामव्याजं व्रजतु मयि पारिप्लवधुरा,
विधिः स्वास्थ्यं धत्तां, भवतु कृतकृत्यश्च मदनः ॥ (२४)

अथवा—समानप्रेमाणं जनमसुलभं प्रार्थितवतो,
विधौ वामारम्भे मम समुचितैषा परिणतिः ।

---

(२४) अथ मालत्यानन्दनार्थं यदिदमनधिगतवान् माधवो नैराश्यजनितदुःखमनल्पमप्रतु-मतमर्थं आह—चिरादिति । चिरात् बहुकालादनुदृष्ट इत्यर्थः, विसिनीसूत्रवत् मृणालतन्तुवत् भिदुरः (भिदेः कुरः) स्वयमेवभिद्यमानः आशातन्तुः मालतीप्राप्तिप्रत्याशारूपं सूत्रं त्रुटतु इदानीं छिन्नो भवतु ; मालतीलाभस्यासम्भवादिति हेतुः सर्वत्र योज्यः । तथा इदानीं महान् विशालः आधिरेव मालतीलाभाशाविगमनिबन्धना मानसी व्यथैव व्याधिः रोगः निरवधिः सीमारहितः यावज्जीवनस्थायीति यावत् प्रसरतु विजृम्भताम् । पारिप्लवधुरा (धुरनयवहेति राजादित्वादत्) अपरिहार्यचित्तचाञ्चल्यभारः अव्याजं निष्कपटं अप्रतिहतं यथा स्यात्तथा प्रतिष्ठां स्थितिं व्रजतु लभताम् । तथा विधिः मदीयदुःखविधानकं दैवं स्वास्थ्यं निर्वृतिं विश्रामनित्यर्थः, धत्तां अवलम्बताम् । निरवधि दुःखार्पणरूपतदीयकर्त्तव्यस्य सम्पादितत्वादिति भावः । मदनश्च कन्दर्पश्च कृतकृत्यः निवर्त्तितकार्य्यः भवतु । विरहिचिरदहनरूपतत्कार्य्यस्यापि सम्पादितत्वादिति भावः ।

अवाशातन्तुरिति आधिव्याधिरिति च निरङ्गं रूपकं, विसिनीसूत्रभिदुर इति लुप्तोपमा, तथा स्वकीयातिदुःसहदुःखप्रतिपादनरूपैककार्य्यं प्रति बहुकारणाभिधानात् समुच्चयश्चालङ्कारः । शिखरिणीवृत्तम् ॥

(२५) नितान्तपरितप्तोऽयमन्या स्वयमेवात्मानं समाश्वासयन्नाह—अथवा समानेति ।

---

(২৪) মাধ। (গোপনে) মৃণালতন্তুর ন্যায় স্বতঃ ভিদ্যমান বহুকাল যাবৎ পরিপোষিত মালতীলাভের আশারূপসূত্র এখন ছিন্ন হউক। মালতীলাভ-প্রত্যাশার উচ্ছেদজনিত মনোব্যথারূপ বিশাল রোগ এখন যাবজ্জীবনের জন্য বিজৃম্ভিত হউক। অপরিহার্য্য চাঞ্চল্যভার অপ্রতিহতভাবে আমাতে স্থিতি-লাভ করুক। আবার দুঃখবিধানকর্ত্তা বিধাতা এখন স্বাস্থ্যলাভ করুন, এবং কামদেবও এখন কৃতকার্য্য হউন।

(২৫) তুল্যানুরাগ দুর্ল্লভ জনকে প্রার্থনা করিলে ও বিধি প্রতিকূলাচারী

तथाप्यस्मिन् दानश्रवणसमयेऽस्याः प्रविगल-
त्प्रभं प्रातश्चन्द्रद्युति वदनमन्तर्दहति माम् ॥ (२५)

काम। [स्वगतम्।] एवमतिदुर्मनायमानः पीडयति मां वत्सो माधवो, वत्सा मालती च। दुष्करं निराशा प्राणितीति। [प्रकाशम्।] वत्स! पृच्छामि तावदायुष्मन्तं, अपि भवान् अमंस्त यथा भूरिवसुरेव मालतीमस्मभ्यं दास्यति?। (२६)

---

समागमे माधवं गुणानुरागे अस्ति अपि पितानभीनन्देन दुष्प्रापं जनं मालतीमित्यर्थः, प्रार्थितवतः मनसा गमितवतो मम विधौ दैवे वामाचरणे प्रतिकूलोद्योगे सति एवं प्रत्यक्षीक्रियमाणा परिणतिः दशाविपर्यासः मालतीनाम विपरीत्येन परमविषादलाभ इति यावत्, समुचिता युक्तैव। विधौ हि प्रतिकूले सुलभमपि न लभ्यते का कथा दुर्लभस्यामस्येति भावः। ईदृगाश्वास-स्थापनेऽपि पुनःसमधिकपरितापकारणं दर्शयति—तथापीति। युक्तत्वेनोक्तपरमविषादलाभस्य कथञ्चित् सहनीयत्वेऽपीत्यर्थः, अस्मिन् दानश्रवणसमये "नन्दनाय राज्ञा मालती दत्ता"तदर्थक-वाक्याकर्णनकाले प्रविगलन्ती दुर्विषहविषादसमागमनात् प्रच्यवन्ती प्रभा प्रफुल्लता यस्मात् तत्, अत एव प्रातश्चन्द्रद्युति प्रत्यूषसमयाऽस्तङ्गतप्रभं अस्याः मालत्या वदनं (कर्तृ) मां अन्तर्दहति ममान्तर्दाहं जनयति। नन्दनार्पणवार्ताश्रवणमात्रेणैवास्या ईदृशी दशा जातेति उक्ते पुनस्तदर्पणे किमस्या भविष्यतीत्येव मे सम्प्रति नितरां परितापहेतुर्न स्वकीयदशाविपर्यास इति भावः।

अवोक्तपरिणतेर्युक्तत्वं प्रति असुलभत्वस्य विधेः प्रतिकूलत्वस्य च हेतुतया पदार्थहेतुकं काव्यलिङ्गं, एवमन्तर्दाहरूपकार्यस्य माधवगतत्वेन विगलत्प्रभवदनरूपकारणस्य मालतीगतत्वेन च कार्यकारणयोर्भिन्नदेशतया असङ्गतिः-प्रातश्चन्द्रद्युतीति लुप्तोपमा-चालङ्कार, इत्येतेषामङ्गाङ्गि-भावेन सङ्करः। शिखरिणीवृत्तम्।

(२६) कामेति। एवं अनेन नन्दनार्पणवृत्तान्तेन अतिदुर्मनायमानः अतिदुर्मनस्कः,मालती च अतिदुर्मनायमानेत्यर्थः। मां पीड़यति सन्तापयति। तथाच मालतीमाधवयोर्दुर्मनायमानत्वस्यैव

---

হইলে তাহার পক্ষে ঈদৃশ বিষাদলাভরূপ পরিণাম যুক্তই। কিন্তু তথাপি এই নন্দনার্পণবার্ত্তাশ্রবণমাত্রেই তৎক্ষণাৎ ক্ষীণপ্রভ প্রাতঃকালীন শশধরের তুল্য-কান্তি এই মালতীর বদন আমাকে অন্তর্দ্দগ্ধ করিতেছে।

(২৬) কাম। (স্বগত) এই নন্দনার্পণবৃত্তান্তে নিতান্ত দুর্ম্মনায়মান বৎস মাধব ও বৎসা মালতী আমাকে সন্তপ্ত করিতেছে। নিরাশ ব্যক্তিদিগের জীবন

माध। [ सलज्जम्। ] नहि नहि। (२७)

काम। न तर्हि प्रागवस्थायाः परिहीयसे ? (२८)

---

पीड़नं प्रति हेत्वन्तरमुपन्यस्यति—दुष्करमिति। निर्नं विद्यते आशा यस्याः सा निराशा जनतेति शेषः, तथाच निराशो जनसमूहः प्राणिति जीवतीति यत्तद्दुष्करमित्यर्थः, दुष्करमिति प्राणितिक्रियाविशेषणं वा, आशाभ्रंशे जनस्य जीवनधारणं मरणापेक्षयापि क्लेशावहमिति भावः। एवञ्च मालतीमाधवयोरपि चिरपोषितायाः सम्मेलनाशायाः नन्दनार्पणप्रतिश्रुतिवृत्तान्तेन विनाशाज्जीवनधारणमशक्यमेव भवेदित्यपि मां पीडयतीति स्थितम्। सम्प्रति आश्वासप्रदानाय प्रकारं भूमिकामारचयति—वत्सेति। "भूरिवसु"रेव अस्मभ्यं मह्यं (अस्मदश्चेति बहुवचनम्)। मालती दास्यति इति अपि किं भवान् अनेन मनसा निर्द्धारितवान्" ? इति आयुष्मन्तं दीर्घजीविनं भवन्तमित्यर्थः पृच्छामीत्यन्वयः। तथा निर्द्धारणे एव त्वां परिहायान्यस्मै मालतीदाने भूरिवसुनाङ्गीकृतेऽपि भवतः परितापो युज्यते नान्यथा, तुभ्यं मालतीप्रदानस्याप्यदादिप्रयत्नसाध्यत्वे निर्द्धारिते तत्सम्भावनाया अधुनापि विद्यमानत्वादिति भावः। अत्रायुष्मन्तमित्यनेन "मयि जीवन्त्यां त्वया जीवनसन्देहो न कर्त्तव्य" इति सूचितम्।

( २७ ) माधेति। "स्वकीयचित्तचाञ्चल्यादेव भवान् मालत्यामनुरक्तो, न तु मालतीप्रदानार्थं भूरिवसुनाहूतोऽत्र समागत इति कामन्दकीवचनाभिप्रायावगतिरेवात्र लज्जात्वे हेतुः। नहि नहि—"भूरिवसुरेव मह्यं मालतीं दास्यती"ति नैवाहं मनसा निर्द्धारितवानित्यर्थः। तेन मदीयमानसेदस्याप्यपरिज्ञानादिति भावः। युष्माकं प्रयत्नेन मालतीप्राप्तिसम्भावनाऽस्तीत्यर्थोऽप्यनेन व्यज्यते।

(२८) कामेति तर्हि भूरिवसुकर्त्तृकमालतीदानस्य प्रत्याशायाऽकृतायां प्रागवस्थायाः पूर्व्वावस्थातः न परिहीयसे न कथमपि विच्युतो भवसि। पूर्वत इदानीं न किञ्चिदपि वैलक्षण्यं जातमित्यर्थः। तथाहि पूर्वमपि भूरिवसुर्मह्यं मालतीं दास्यतीति प्रत्याशा नासीत्, इदानीमपि नास्ति; युवयोः परस्परानुरागोऽपि यथापूर्वं वर्त्तते, अस्माकं प्रयत्नोऽपि पूर्ववदेव विद्यते, तदधुनापि कस्यचिदभिनवोद्‌भूतकारणस्यानुत्पादादेवाधिकः परितापः कर्त्तव्य इति भावः।

---

ধারণ করা অতীব দুষ্কর। (প্রকাশ্যে) বৎস মাধব! আমি তোমাকে জিজ্ঞাসা করি, তুমি কি মনে ভাবিয়া ছিলে যে, "ভূরিবসুই আমাকে মালতী প্রদান করিবে"।

(২৭) মাধ। (লজ্জিত ভাবে) ভূরিবসুই যে আমাকে মালতী প্রদান করিবেন, ইহা আমি কখনও ভাবি নাই।

(২৮) কাম। ভূরিবসু কর্তৃক মালতীপ্রদানের আশা না করিয়া থাকিলে এখনও পূর্বাবস্থা হইতে কিছুই বিচ্যুত হও নাই।

तस्मादिदमर्शितव्यमेतत्। कथञ्च, वत्स! माम् अनवधानां मन्यसे। पश्य। (३२) मा वा भवत्स्वपि नाम तद्भूत् पापं यदस्यां नु मया विशङ्कयम्। तत्सर्वथा सङ्गमनाय यत्नः प्राणव्ययेनापि मया विधेयः॥ (३३)

प्रभवति न तु मम कन्यकाजनस्य" इत्येतादृशार्थान्तराभिव्यञ्जनेनापि तेनाभिहितत्वात्। न चैतादृश-चातुर्य्यपूर्णाभिधानमपि दूषणीयमिति वचनीयम्। "अश्वत्थामा हत" इत्यभिहितवता धर्म्मावतार-युधिष्ठिरेणाप्यगत्या तादृशाभिधानस्याङ्गीकृतत्वेन राजानुनय्यधी-नानात्यादिजनानामेतादृशस्थले तादृशाभिधानस्य प्रायः स्वभावसिद्धत्वादिति मन्तव्यम्।

ननु तद्वाक्यप्रतिपादितप्रतिनिधित्वस्यास्वीकृत्वेऽपि राज्ञः नरेन्द्राभिलाष्टैवान्यदीयकन्याप्रदानेऽपि स्वत एव तस्यास्त्यधिकार इत्याशङ्कां निराकर्तुमाह—कन्याप्रदाने चेति। नृपतयः राज्ञः प्रभावं निरन्तारः स्वतन्त्रकर्त्तार इति यावत्, इत्येवंविधः एवम्प्रकारः धर्म्माचारसमयः धर्म्मशास्त्रशिष्टाचारयोः सिद्धान्तः ("समया शपथाचारः कालसिद्धान्तसंविदः" इति विश्वः) न नास्तीत्यर्थः। वाक्यार्थमुपसंहरति—तस्मादिति। दर्शितयुक्त्यादिभिः राज्ञः प्रदानस्य लोकशास्त्र-विरुद्धत्वादित्यर्थः, एतत् राज्ञः प्रदानप्रतिश्रुत्यादिकं विमर्शितव्यं विशेषतो विवेचनीयं युष्माभि-रिति शेषः। तथाच राज्ञः प्रदानवार्त्तामात्रेणैवाशा न त्यक्तव्येति भावः।

नन्वेतावतापि नन्दनाय समर्पणे राज्ञो यत्नातिशयात् माधवाय समर्पणे कस्यापि चेष्टा-विरहाच्च माधवस्य कथं तत्प्राप्तिसम्भावनेत्याशङ्क्याह—कथञ्चेति। कथं केन हेतुना अनवधानां मालतीमाधवयोः समागमविषये उदासीनां मन्यसे चिन्तयसि? तथाच मदीयचेष्टयैव मालती-माधवयोः संघटनं भविष्यतीति नानिष्टं शङ्कनीयमिति भावः। विश्वासस्थापनाय साहङ्कार-माह—पश्येति। जानीहीत्यर्थः। अत्र तुल्यतर्कोनाम नाट्यलक्षणम्। तथाच दर्पणे—"तुल्यतर्को यदर्थेन तर्कः प्रकृतगामिना" इति।

(३२) मा वेति। नु भो! अस्यां मालत्यां यत् पापं विवाहानिर्वाहे मरणरूपं यदनिष्टं

পাপের হেতু সত্যত্ব ও মিথ্যাত্ব ব্যবস্থিত আছে। সত্য ও মিথ্যা প্রকটন সকলই বাক্যের অধীন। সুতরাং ভূরিবসুর সেই বাক্য সর্ব্বথৈব মিথ্যা। মালতী কিছু মহারাজের নিজকন্যা নহে, রাজা যে কন্যা প্রদানের কর্ত্তা এরূপও ধর্ম্মশাস্ত্রের বা শিষ্টাচারের সিদ্ধান্ত নাই, সুতরাং রাজার এইরূপ প্রদানাঙ্গীকার যে যুক্তিযুক্ত কি না, ইহা তোমাদের বিশেষ বিবেচনীয়। বৎস! আমাকেই বা এবিষয়ে উদাসীন মনে করিতেছ কেন? দেখ—

(৩৩) তোমার সহিত বিবাহনির্ব্বাহ না হইলে মালতীর যে অনিষ্টের আশঙ্কা

[ नेपथ्ये । ] भअवदि कामन्दइ ! एसा भट्टिणी विण्णवेदि, जधा मालदीं घेउण तुरिदमाअच्छदुत्ति (प) ।

काम । वत्से ! उत्तिष्ठ । [ सर्वे उत्तिष्ठन्ति । ] (३६)

[ मालतीमाधवौ सकरुणानुरागमन्योऽन्यमवलोकयतः । ] (३७)

---

(प) भगवति कामन्दकि ! एषा भट्टिनी विज्ञापयति, यथा मालतीं गृहीत्वा त्वरितमागच्छतु इति।

---

त्यागी ब्रह्मचर्य्यसमन्वितः। जितेन्द्रियत्वमाचारी नैकस्मिन् वसतिचिरं" मित्यादि शास्त्रनिर्दिष्टाः सर्व्वं सङ्गपरित्यागादयः तेषां विमुखा विरोधी ते तव यत्रः मालतीमाधवसमागमसम्पादने प्रवृत्तिः प्रसक्तः त्वय्रः आपतित इति यावत्। अपरं पुनः इतः परन्तु दैवं अनयोर्भाग्यं प्रभवति समागमाभिलाषं पूरयितुं नाशयितुं वा शक्नोति। त्वया तु यावत् कर्त्तव्यं तावदेव क्रियते, तथापि यदि मनोरथसिद्धिर्न भवेत्तदा नितरामनयोर्दुरदृष्टमिति भावः। इदञ्चानुनयरूपं पर्य्युपासनं नाम प्रतिमुखसन्धेरङ्गम्। तदुक्तं दर्पणे"—कृतस्यानुनयः पुनः। स्यात् पर्य्युपासनं—" अत्राप्रस्तुतयोर्द्वयोर्द्वयतीत्येकक्रियाभिसम्बन्धात्तुल्ययोगितालङ्कारः। शिखरिणीवृत्तम्। उभयोरेव लक्षणमुक्तम्।

( प ) नेपथ्य इति। भट्टिनी राज्ञी, यथाह भरतः—राजस्त्रियस्तु सम्भाष्याः सर्व्वाः परिजनेन तु। भट्टिनी स्वामिनीत्येवं नाट्ये प्राज्ञैर्विचक्षणाः॥" त्वरितमागच्छतु वैवाहिक-माङ्गलिकानुष्ठानसम्पादनार्थमित्याशयः।

( ३६ ) कामेति। वत्से मालति ! उत्तिष्ठ त्वरितमित्यर्थः, राज्ञी विज्ञापनावज्ञा-प्रदर्शने कार्य्यहानिः स्यादित्याशयः। सर्व्वे मालतीमाधवादयः।

( ३७ ) मालेति। सकरुणानुरागं करुणानुरागाभ्यां सह यथा स्यात्तथेत्यर्थः। अत्र कारुण्यं परस्परानिष्टाशङ्कया, अनुरागः परस्परभावाभिव्यक्तिदार्ढ्येन।

---

সন্ন্যাসাশ্রমসময়োচিত ব্যবহারের বিরোধী যত্ন ও আপনার আপতিত হইয়াছে। এখন ইহাদের অদৃষ্টই যাহা করিতে সমর্থ হয়।

(প) ( নেপথ্যে ) ভগবতি কামন্দকি ! রাজ্ঞী জানাইতেছেন যে, মালতীকে নিয়া অতি সত্বর আসুন।

(৩৬) কাম। বৎসে ! উঠ। (সকলে উঠিল)।

(৩৭) (মালতী এবং মাধব করুণ ও অনুরাগের সহিত পরস্পরকে অবলোকন করিতে লাগিল )।

माध। [स्वगतम्।] कष्टमेतावती लोकयात्रा मालत्या समं माधवस्य, अहो नु खलु भोः। (३८)

सुहृदिव प्रकटय्य सुखप्रदः प्रथममेकरसामनुकूलताम्।
पुनरकाण्डविवर्त्तनदारुणो विधिरहो विभिनष्टि मनोरथम्॥३९

माल। [स्वगतम्।] महाभाअ! लोअणाणन्द! एत्तिअं दिट्ठोसि। (फ)

---

(फ) महाभाग लोचनानन्द! एतावद्दृष्टोऽसि।

---

(३८) माधेति। माधवस्य दुर्भाग्यस्य कथनमिदम्। मालत्या समं लोकयात्रा दर्शनालापादाकस्मिकानुरागजनितौत्सुक्यव्यवहारः, एतावती इयती एतदवस्थानीति यावत्। तदेतत् कष्टमित्यर्थः। अहो आश्चर्ये, नु वितर्के, खलु निश्चये, भोः सम्बोधने, तथाच हे हृदय! आश्चर्यमेव दैवस्य दुर्विलसितमिति तर्कयामीत्यर्थः। अथवा "अहो नु खलु भोः" इत्येकमेवाव्ययं निरतिशयविषादसूचकम्।

(३९) सुहृदिति। विधिर्विधाता सुहृदिव बन्धुरिव प्रथमं आदौ एकरसां एकगुणां कार्यैकगुणामिति यावत् (सङ्ग्रामादौ विधि वैधे गुरौ रागे द्रवे रस इत्यमरः)। अनुकूलतां प्रस्तुतकार्यानुगुण्यं प्रकटय्य प्रकाश्य सुखप्रदः सुखविधायकः सन् अहो आश्चर्यं पुनः अकाण्डे अनवसरे अकस्मादिति यावत् (काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु इत्यमरः)। विवर्त्तनेन विपरिवर्त्तनेन प्रातिकूल्येनेत्यर्थः, दारुणः कठिनः सन् मनोरथस्य वाञ्छां पीडां विभिनष्टि विशेषेणोत्पादयति विध्वंसयतीति भावः। तथाच विधिनिन्दया विषादातिशयो व्यज्यते। उत्तररामचरितचतुर्थाङ्केऽपि श्लोकोऽयमविकलं परिदृश्यते। अत्र सुहृदिवेति श्रौती उपमालङ्कारः। द्रुतविलम्बितं वृत्तम्।

(फ) मालेति। लोचनयोरानन्दो यस्मात् स लोचनानन्दः लोचनानन्दकर इत्यर्थः,

---

(৩৮) মাধ। (স্বগত) অহো! মালতীর সহিত আলাপাদি সাংসারিক ব্যবহার মাধবের এ পর্য্যন্তই পরিসমাপ্ত হইল। দৈবগতি নিতান্তই আশ্চর্য্য বোধ হইতেছে।

(৩৯) বিধাতা প্রথমে কার্য্যপ্রধান অনুকূলতা প্রকাশ করিয়া সুখপ্রদ হইয়াও পুনরায় অসময়ে অকারণ প্রতিকূলাচরণে কঠিন হইয়া চিত্তপীড়া উৎপাদন করিতেছেন; ইহা অতীব আশ্চর্য্য।

(ফ) মাল। (স্বগত) হে মহাভাগ! লোচনানন্দকর! এ পর্য্যন্তই তোমাকে দেখিলাম।

लव। हद्धी ! हद्धी ! शरीरसंसअं ज्जेव्व णो पिअसही आरोविदा अमच्चेण (व)।

माल। [स्वगतम्] परिणदं दाणीं मे जीविदत्तिह्णाए फलम्। [सास्रम्।] णिव्वूढं अ णिक्करुणदाए तादस्सवि कावालिअत्तणं, पडिट्ठिदो दुट्टदेव्वस्स दारुणसमारम्भसरिसो परिणामो, कं एत्थ उवालहामि मन्दभाइणी, कं वा असरणा सरणं पडिवज्जामि (भ)।

---

(व) हा धिक् हा धिक् शरीरसंशयमेव नः प्रियसखी आरोपिता अमात्येन।

(भ) परिणतमिदानीं मे जीवितवृष्णायाः फलम्। निर्व्यूढं च निष्करुणतया तातस्यापि कापालिकत्वम्। प्रतिष्ठितो दुष्टदैवस्य दारुणसमारम्भसदृशः परिणामः। कमिहोपालभे मन्दभागिनी, कं वा अशरणा शरणं प्रतिपद्ये।

---

क्वचित्तथैव पाठः। एतेन लोचनयोरिवानन्दस्रुया रुम्पादितः, केनहस्तु—रुहती पौढ़ व दोति ध्वनिः। एतावत् इयदवसानं यथा स्यात्तथा दृष्टोऽसि नातःपरं मया दृश्यते इत्यर्थः, मम जीवनाभावादिति भावः। इदञ्च प्रत्यक्षनिष्ठुरत्वात्-वज्रं-नाम—प्रतिमुखसन्धेरङ्गं। तदुक्तं दर्पणे—"प्रत्यक्षनिष्ठुरं वज्र" मिति।

(व) लवेति। शरीरसंशयं वाञ्छितार्थविघातेन देहधारणसन्देहं, आरोपिता प्रापिता भगवति ! अमात्येन भूरिवसुना। तस्मात् गुरुजनमनपेक्ष्य त्वमेव सख्याः प्राणरक्षणे यतस्व त्वाशयः।

(भ) मालेति। जीवितवृष्णायाः प्राणधारणस्पृहायाः फलं परिणतं पर्य्यवसितं। कापालिकत्वस्य नरवलिदानकर्तृभावः कापालिकत्वं—तद्वन्नृशंसत्वमित्यर्थः, निर्व्यूढं सम्पन्नं दुष्टदैवस्य क्रूरनियतेः दारुणः भयङ्करः यः समारम्भः मद्विषये कार्य्यनिष्पादनक्रमः तत्सदृशः तदनुरूपः परिणामः परिणतिः प्रतिष्ठितः (प्रतिष्ठा समाप्तिः सञ्जाता अस्येति तारकादित्वादितच्) समाप्तिं प्राप्त इत्यर्थः। मरणस्याचिरभावित्वात्तदतिरिक्तस्य च परिणामस्य भावादिति भावः। मन्दभागिनी मन्दभागधेया अहमिति शेषः, कं उपलभे निन्दामि ? भाग्यमेव मे निन्दनीयमित्यर्थः।

---

(व) লব। অহো !! অমাত্য আমাদের প্রিয় সখীকে জীবনসংশয়াবস্থায় আরোপিত করিলেন।

(ভ) মাল। (স্বগত) এপর্য্যন্তই আমার প্রাণধারণ-স্পৃহার ফল পর্য্যবসিত হইল। নির্দ্দয়তায় পিতারও নরঘাতকের ন্যায় নৃশংসত্ব সম্পন্ন হইল। দুষ্ট নিয়তির

लव। सहि, इदो इदो (म) [इति निष्क्रामन्ति।]

माध। [स्वगतम्।] नूनमाश्वासनमात्रमेवैतत् माधवस्य सहजस्नेहकातरा करोति भगवती। [सोद्वेगम्।] हन्त सर्वथा संशयितजन्मसाफल्यः संवृत्तोऽस्मि, तत्किमिदानीं कर्त्तव्यम्।

[विचिन्त्य।] न खलु महामांसविक्रयादन्यदुपायान्तरं पश्यामि। [प्रकाशम्।] वयस्य! मकरन्द! अपि भवान् उत्कण्ठते मदयन्तिकायाः? (४०)

---

(म) सखि! इत इतः।

---

अपरस्या एवञ्च पितुरपि विनाशसाधकत्वात् बन्धुहीना कं वा शरणं रक्षकं प्रतिपद्ये प्राप्नोमि? तदाव भगवति कामन्दकि! रक्ष रक्ष! इत्येव मां रक्षेत्यादयः।

(म) लवेति। इत इत आगम्यतामिति शेषः। निष्क्रामन्ति मालतीकामन्दकी-लवङ्गिका इति शेषः।

(४०) माधेति। सहजस्नेहेन मां प्रति स्वाभाविकवात्सल्येन कातरा मदीयदुःखभावना-दुत्कण्ठिता भगवती कामन्दकी नूनं निश्चितं एतत्—"न तर्हि मन्त्रस्थायाः परिक्षेप्स्ये" इत्यादिकं माधवस्य मम मनआश्वासनमात्रं केवलं सान्त्वनामेव करोति। स्वयं महाराजस्य विरोधित्वात् कार्यतः किमपि कर्त्तुं न शक्नोतीति माधवेन सूचितम्। संशयितं राज्ञः प्रति-बन्धकत्वात् कामन्दक्या आनुकूल्याच सन्दिग्धं जन्मसाफल्यं मालतीप्राप्तिरूपं जन्मनः साफल्यं यस्य स तादृशः संवृत्तोऽस्मि। तदाचाव मालतीप्राप्तिरेव जीवनसाफल्यमनन्यसदृशेन माधवा

---

তাহার কার্যাক্রমের অনুরূপ পরিণামও পরিসমাপ্ত হইল। বন্ধুহীনা আমি এবিষয়ে কাহাকেই বা তিরস্কার করিব? রক্ষকবিহীন হইয়া কাহারই বা রক্ষা পাইব?

(ম) লব। সখি! এদিকে এদিকে। (কামন্দকী, মালতী ও লবঙ্গিকা নিষ্ক্রান্ত হইলেন)

(৪০) মাধ। (স্বগত) সহজ স্নেহকাতরা ভগবতী (কামন্দকী) নিশ্চয়ই (পূর্ব্বোক্ত সকল বাক্য) মাধবের আশ্বাস প্রদান মাত্র করিলেন। উদ্বেগের

माध। सुलभैव बुद्धरक्षिता प्रियसखी भवतः। अपि च—(४३)

प्रमथ्य क्रव्यादं मरणसमये रक्षितवतः
परिष्वङ्गं लब्ध्वा तव, कथमिवान्यत्र रमताम्।
तथा च व्यापारः कमलनयनाया नयनयो-
स्त्वयि व्यक्तस्नेहस्तिमितरमणीयश्चिरमभूत्॥ (४४)

---

स्पर्शोऽपि जात इति सूचितम्)। तथा त्रस्तः कुतश्चित् कारणाद्भीतः यः एकहायनकुरङ्गः एक-वर्षवयस्कमृगः (वर्षोऽब्दो हायनोऽस्त्री स्यादित्यमरः) तस्येव विलोले विशेषेण चञ्चले दृष्टी नयने यस्याः सा (त्रस्तत्वं एकहायनत्वञ्च कुरङ्गस्य विशेषणं नेत्रयोश्चाञ्चल्यातिशयद्योतनार्थं) तथाभूता मदयन्तिका अमृतसंवलितैः सुधाविमिश्रितैरिवाङ्गैः उरःप्रभृतिशरीरावयवैः यत् आश्लिष्टवती आलिङ्गनं कृतवती, तत् आलिङ्गनं (कर्त्तृ) मे मम मनः क्षिपति आकुलयति। तस्मादतीवोत्कण्ठितोऽस्मीति भावः। अत्र तन्मे मनः क्षिपतीत्यत्र विधेयत्वेनाभिमतस्य मनः-क्षेपस्य यच्छब्दघटितवाक्यपूर्व्वपादरूपरचनावैपरीत्येन गुणीभूतत्वात् "न्यक्कारो ह्ययमेव मे य"-दित्यादिवद्वाक्यगतविधेयविमर्षदोषः, तथा क्षिपधातोराकुलीकरणार्थावाचकत्वादवाचकत्व-दोषश्च। अत्र तृतीयचरणे लुप्तोपमालङ्कारः। चतुर्थचरणे च अमृतसंवलितैरिवेति क्रियोत्प्रेक्षालङ्कारः, इत्यनयोर्नैरपेक्ष्येण संसृष्टिः। वसन्ततिलकं वृत्तम्। एतत् श्लोकीयतृतीय-चरणं पञ्चान्तत्वमात्रेण परिवर्त्तितमुत्तररामचरितेऽपि दृश्यते।

(४३) नाथेति। बुद्धरक्षितायाः प्रियसखी मदयन्तिका भवतः सुलभैव अवश्यं प्राप्यैव। अत्र बुद्धरक्षिताप्रियसखीत्वेन कथनमनुकूलदूतीसद्भावद्योतनार्थं। तथाच बुद्धरक्षितैव विविधमुपायमुद्भाव्य तत्सनागमं साधयिष्यतीत्याशयः। सुलभत्वमेवोपपत्त्या द्रढयति—अपि-चेति। अन्यच्च तदवाप्तौ कारणं पश्येत्यर्थः।

(४४) किन्तत् कारणमित्याह—प्रमथ्येति। क्रव्यं मांसं अत्तीति (अपक्रेत्यणेवेति नियमात् कर्म्मण्यन्) क्रव्यादं मांसाशिनं व्याघ्रमित्यर्थः, प्रमथ्य निहत्य मरणसमये तस्याः प्राण-

---

না করিয়া যে সুধাবিনিশ্রিতের ন্যায় প্রতিয়মান অঙ্গদ্বারা আলিঙ্গন করিয়াছে, সেই আলিঙ্গনই আমার মনকে আকুলিত করিতেছে।

(৪৩) নাথ। বুদ্ধরক্ষিতার প্রিয়সখী (মদয়ন্তিকা) অবশ্যই তোমার অনায়াসলভ্যা হইবে। আরও দেখ—

(৪৪) মরণসময়ে ব্যাঘ্র নিহত করিয়া তুমি তাহাকে রক্ষা করিয়াছ, সুতরাং

मक। तदुत्तिष्ठ पारासिन्धुसम्भेदमवगाह्य नगरीमेवप्रविशावः, । (४५) [ उत्थाय परिक्रामतः । ]

---

विपत्तिकाले रचितवतः जीवितप्रदानेनातुलनीयमुपकारं कृतवतस्तव परिष्वङ्गं आलिङ्गनं लब्ध्वा कथमिव केन प्रकारेण मदयन्तिका अन्यत्र तद्भिन्ने जने रमतां अनुरक्तचित्ता भवेत्, अपितु नैवेत्यर्थः। तथाच प्राणरक्षणलक्षणोपकारस्मरणात् एकस्यालिङ्गनं लब्ध्वा पुरुषान्तरानुसरणस्य कुलजाजनविरुद्धत्वाच्च मदयन्तिका कथमपि जनान्तरं न भजेतेति तवैव सुलभा भवेदिति भावः। ननु तदीयतात्कालिकालिङ्गनं त्रासहेतुकमेव नानुरागहेतुकमिति शङ्कां निराकर्त्तु मनुरक्तिनिदर्शनं व्यक्तीकरोति—तथाचेति। तथाच त्वयि तदनुरागानुमानकारणञ्चेत्यर्थः। कमलनयनायाः पद्मेक्षणायाः मदयन्तिकायाः नयनयोर्व्यापारः दृष्टिनिक्षेपः त्वयि व्यक्तस्नेहेन परिस्फुटानुरागेण स्तिमितः—निश्चलः अत एव रमणीयः मनोहरः चिरं बहुकालं व्याप्य अभूत्, मदयन्तिका बहुकालं व्याप्य निष्पन्दनेत्राभ्यां त्वामद्राक्षीदित्यर्थः।

तथाचात्र तादृशनिष्पन्दावलोकनरूपसाधनेन मकरन्दे मदयन्तिकाया दृढानुरक्तिरूपसाध्यस्य ज्ञानात् अर्थापत्त्युपमाभ्यां विच्छित्तियानुमानालङ्कारः। एवं मांसादविशेषे व्याघ्रे वक्तव्ये क्रव्याद इति सामान्याभिधानाद्विशेषेऽविशेषाख्यदोषः। तथा युक्तिप्रदर्शनेनार्थविशेषावधारणा-"दुपन्यासो" नाम प्रतिमुखसन्धेरङ्गम्। तल्लक्षणं प्राचीनोक्तं यथा—"उपपत्तिकृतो योऽर्थः स उपन्यास उच्यते" इति तादृशनिश्चयेन मकरन्दस्य प्रसन्नताया अप्युत्पादनात् "उपन्यासः प्रसादन"मिति दर्पणोक्तलक्षणमप्यत्र घटत इति मन्तव्यम्। शिखरिणीवृत्तं।

(४५) मकेति। पारासिन्धुश्च तवत्यौ नदीविशेषौ तयोः सम्भेदं सङ्गमं। अवगाह्य आलोड्य स्नात्वेति यावत्। क्लमगान्त्यर्थं शार्दूलव्यापादनसंश्लिष्टशोणितादिचालनार्थञ्च स्नानाभिसन्धानमिति मन्तव्यं। "पारे"त्यत्र "वरदेति"पाठभेदः।

---

তোমার আলিঙ্গন লাভ করিয়া মদয়ন্তিকা কিপ্রকারে পুরুষান্তরে অনুরক্তা হইবে? তাহার অনুরাগের নিদর্শনও এই যে, সেই কমলনয়নার বহুকালব্যাপী দৃষ্টিনিক্ষেপও তোমাতে পরিস্ফুটস্নেহ নিশ্চলতারমণীয় হইয়াছিল।

(৪৫) মক। তবে উঠ, পারা ও সিন্ধুনদীর সঙ্গমস্থলে অবগাহন করিয়া নগরেই প্রবেশ করি। ( উঠিয়া উভয়ের পরিক্রমণ )।

[ इति निष्क्रान्ताः सर्वे । (४८) ]

इति मालतीमाधवे शार्दूलविभ्रमो नाम चतुर्थोऽङ्कः (४९) ।

---

(४८) इतीति। सम्प्रति द्वयोर्निष्क्रान्तावपि सर्व्वशब्दस्य बहुवचनस्य चोपपत्ति प्रथमाङ्कशेषवद्बोद्धव्या।

(४९) इतीति। शार्दूलकृतप्रहारेण विभ्रमः मकरन्दमाधवयोर्मोहः यस्मिन् स नाम तन्नाम्ना प्रसिद्धः। अस्मिन्नङ्के शार्दूलकृतप्रहारेण मकरन्दाय विभ्रमः तद्दर्शनेन माधवस्य च प्रधानतया वर्णित इति शार्दूलविभ्रमनाम्ना प्रसिद्धोऽयमङ्क इत्यर्थः। क्वचित् पुस्तके शार्दूल विभ्रमोनामेत्यंशो नास्ति ॥

इति काव्यतर्कतीर्थोपनामक-श्रीकुञ्जविहारि-तर्कसिद्धान्तभट्टाचार्यकृतायां तत्त्वबोधिनी-समाख्यायां मालतीमाधवव्याख्यायां चतुर्थाङ्कविवृतिः समाप्ता ॥

---

করিয়াছে, স্নানমাত্রোত্থিত সেই সকল বধূজনে যাহার তটভূমি পরিব্যাপ্ত।

(৪৮) ( সকলে নিষ্ক্রান্ত হইল )।

(৪৯) ( শার্দ্দূলবিভ্রমনামক চতুর্থ অঙ্ক সমাপ্ত )।

# पञ्चमोऽङ्कः ।

[ ततः प्रविशति आकाशयानेन भीषणोज्ज्वलवेशा कपालकुण्डला । (१) ]

कपा । षड़धिकदशनाड़ीचक्रमध्यस्थितात्मा,
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः ।

---

(१) चतुर्थाङ्कसूचितमहानांवविक्रयोपयोगिवृत्तान्तावेदकं विष्कम्भकमारभते—तत इत्यादिना । भीषणो नरशिरोऽस्थिधारणादिना भयप्रदः, उज्ज्वलो योगप्रभावादिना प्रदीप्तश्च वेशो यस्याः सा, कपाले नरशिरोऽस्थिनी कुण्डले कर्णालङ्कारविशेषौ यस्याः सा कपालकुण्डला तन्नाम्नी काचित् कापालिकी आकाशयानेन योगजसिद्धिप्रभावाद्गगनमार्गेण खेचरा यावत्, प्रविशति रङ्गभूमिमाक्रम्य तिष्ठति ।

(२) षड़धिकेति । यः षड्भिरधिका अध्यारूढ़ाः ( अध्यारूढ़शब्दस्याधिक निपातः ), दश षड़धिका दश इत्यर्थः, या नाड्यः इड़ादयः, तासां यच्चक्रं मण्डलाकारं तस्य मध्ये स्थित आत्मा स्वरूपं यस्य स तथाभूतः, तथा तद्विदां तादृशात्मवेदिनां योगिनां हृदये विनिहितं तपसा संस्थापितं रूपं स्वकीयाकृतिर्येन तादृशः सन् सिद्धिदः भुक्तिमुक्तिप्रदः, तथा अविचलितमनोभिः तदेकायीकृतमानसैः साधकैः उपासकैः नन्दनाथः अनिधनाथः, शक्तिभिः इच्छाक्रियाज्ञानरूपाभिः परिवृढः व्याप्तः अथवा ब्राह्मयाद्यष्टशक्तिभिः परिवृढः प्राप्तवल्लभतया परिवेष्टितः, स शक्तिनाथः शक्तीनां निरुक्तेच्छादिक्रियाज्ञानरूपाणां नाथः प्रयोक्ता, अथवा ब्राह्मयाद्यष्टशक्तिभिः परिवृढः प्राणवल्लभतया परिवेष्टितः, स शक्तिनाथः शक्तीनां निरुक्तेच्छादिक्रियाज्ञानरूपाणां नाथः प्रयोक्ता, अथवा ब्राह्म्यादिशक्तीनां पतिः भूतनाथ इत्यर्थः, भवति सर्वोत्कर्षेण वर्त्तते ।

नाड़ीनामनन्तत्वेऽप्यत्र षोड़शत्वाभिधानं प्राधान्यानुसन्धानेन, प्रधानाः षोड़श नाड्यो यथा—

"इड़ा च पिङ्गला चैव सुषुम्ना च परा स्मृता ।
गान्धारी हस्तिजिह्वा च पूषा यशस्विनी तथा ।

---

(১) গগনমার্গে ভীষণ ও উজ্জ্বল বেশধারিণী কপালকুণ্ডলার প্রবেশ ।

(২) কপা । যাহার স্বরূপ ইড়াপিঙ্গলাদি ষোড়শ নাড়ীচক্রের মধ্যে অবস্থিত, যিনি তাদৃশ আত্মজ্ঞদিগের হৃদয়ে নিজের ...

[सकौतुकमग्रेऽवलोक्य ।] तत्कोऽयमतिगम्भीरमधुराकृतिः उत्तम्भित-
कुटिलकुन्तलः, कृपाणपाणिः श्मशानवाटमवतरति ? य एषः—(८)

कुवलयदलश्यामोऽप्यङ्गं दधत्परिधूसरम्,
ललितचरणन्यासः श्रीमान्मृगाङ्कनिभाननः ।
हरति विनयं वामो यस्य प्रकाशितसाहसः ।
प्रविगलदसृक्पङ्कः पाणिर्लूननरजाङ्गलः ॥(९)

---

काचिदुत्कृष्टा स्त्री, ( "जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते" इति विश्वः )। उपहृत
बलिरूपेण दातव्यम्। तत् स्त्रीरत्न अत्रैव नगरे सन्निहिते पद्मावतीनामकजनपदे, विदि
सर्व्वजनावगतं आस्ते विद्यते. इति मे गुरुणा कथितमित्यन्वयः। तस्मात् विचिनोमि
अन्विष्यामि। सकौतुकं—"एतादृशगम्भीरमधुराकृतिरयं कथमस्मिन् भीषणे महाश्मशाने
निशायां सञ्चरती"ति कौतुकेन सह वर्त्तमानं यथा स्यात्तथेत्यर्थः। अतिगम्भीरा ईदृशभीषण-
स्थानेऽपि अलक्ष्यकम्पादिविकारभावा मधुरा कोमला च आकृतिर्यस्य सः। गाम्भीर्यमाधुर्ययो-
र्लक्षणं अवदन्।

यथा—"विकाराः सहजा यस्य हर्षक्रोधभयादिषु।
भावेषु नोपलभ्यन्ते तद्गाम्भीर्यमुदाहृतम् ॥
अभ्यासात् कारणानान्तु श्लिष्टत्वमुपजायते।
महत्स्वपि विकारेषु तन्माधुर्य्यमुदाहृतम् ॥" इति

तथा उत्तम्भितः ऊर्द्ध्वीकृत्य बद्धः कुटिलः वक्रः कुन्तलभारः केशकलापो यस्य सः, कृपाणः
खड्गः पाणौ हस्ते यस्य सः, एवम्भूतः कोऽयं श्मशानवाटं अवतरतीत्यन्वयः। तमेव विशिनष्टि
—य एष इति।

(९) कुवलयेति। कुवलयदलश्यामोऽपि स्वभावत इन्दीवरपत्रवन्नीलवर्णोऽपि सन्
परिधूसरं विप्रलम्भादिनिमित्तकसंस्काररहित्यात् धूसरवर्णं अङ्गं दधत् धारयन्, ललितः

---

কন্যাকা দেবীর নিকট পূর্ব্বপ্রতিশ্রুত স্ত্রীরত্ন উপহার দিতে হইবে। সর্ব্বজনবিদিত
সেই স্ত্রীরত্ন এই পদ্মাবতীনগরেই আছে", সুতরাং আমি অন্বেষণ করিয়া দেখি।
(কৌতুকের সহিত সম্মুখের দিকে অবলোকন করিয়া) উচ্চীকৃতরূপে বদ্ধ
কেশকলাপশালী ও অতি গম্ভীর মধুরাকৃতি ইনি আবার কে খড়্গহস্তে শ্মশান-
পথে অবতরণ করিতেছেন?

(৯) ইনি স্বভাবতঃ নীলোৎপলপত্রের ন্যায় শ্যামবর্ণ হইয়াও বিপ্রলম্ভাদি

व्योमस्तापिच्छगुच्छावलिभिरिव तमोवल्लरीभिर्व्रियन्ते
पर्यन्ताः प्रान्तवृत्त्या पयसि वसुमती नूतने मज्जतीव ।
वात्यासंवेगविष्वग्विततवलयितस्फीतधूम्याप्रकाशम्
प्रारम्भेऽपि त्रियामा तरुणयति निजं नीलिमानं वनेषु ॥ (११)

---

मनोहितं चेष्टितं स्त्रीरत्नानयनरूपं सम्पादयामि साधयामि । अयमस्य कार्यं साधयतु, अहमपि स्वकार्यं साधयामीति भावः, पूर्वोद्दिष्टसाधनकालोऽभ्युपस्थित इत्याह—विगलितप्राय इति गतप्राय इत्यर्थः, पश्चिमसन्ध्यासमयः सायंसन्ध्यासमागमः । विगलितप्रायत्वमेव समर्थयति—तथाहीति ।

(११) व्योम इति व्योम आकाशस्य प्रान्ताः दृष्टिसीमान्तवर्त्तिनः भूतलप्रा इव प्रतिभासमाना. प्रदेशाः तमोवल्लरीभिः ध्वान्तलताभिः तापिच्छगुच्छावलिभिरिव तमालस्तवकश्रेणीभिरिव व्रियन्ते आच्छाद्यन्ते । तथा वसुमती पृथिवी प्रान्तवृत्त्या परितः पर्यन्तभागनिम्नत्वकारणेन नूतने अभिनवे पयसि जले मज्जतीव निमग्ना भवतीव । तथा त्रियामा रात्रिः प्रारम्भेऽपि प्रादुर्भावकालेऽपि प्रदोषकालेऽपीति यावत्, वनेषु वनप्रदेशेषु वात्याया वायुसमूहस्य ("वातकृते वातौ स्याद्वात्या वातमण्डली"ति त्रिकाण्डशेषः), संवेगेन-सम्यक् वेगेन विष्वक् सर्वतः वितता विस्तारिता वलयिता वलयाकारेण स्थिता-स्फीता प्रवृद्धा या धूम्या धूमसमूहः ("धूम्या धूमसमूहेऽपि नीहारेऽपि निगद्यते" इति धरणिः),तस्याः प्रकाशो यत्र तं तद्रूपमित्यर्थः । निजं स्वीयं नीलिमानं नीलत्वं तरुणयति प्रारम्भ एव प्रगाढान्धकारतरुणयौवनदशामापादयति । तदात्र मनोहितसाधनस्यावसरोऽयमेव योग्यावसर इति भावः ।

यथा कुक्षीकृतघटाहारादिवस्तुवस्तुनो जलमज्जनकालप्रथमतः प्रान्तभाग एव निमज्जति, ततः क्रमशो मध्यादिभागमज्जनेन सर्वदैवादृश्यता जायते, तथा दृष्टिसीमान्तवर्त्तिया नूतनजल इव प्रतीयमानो मज्जमान एव प्रथमतस्तमालगुच्छावलितुल्यगाढान्धकारवल्लरीभिराच्छादित इति पृथिव्या अपि मज्जन्तीव प्रतीयमानाः पर्यन्तीभूततदंश एव प्रथमतस्तमसाच्छन्नः, ततः क्रमशः सन्निहितमध्यादिभागस्य प्रगाढतमसाच्छन्नतया पयोराशिनिमग्ना इव सर्वदैवादृश्यता

---

মন কি? ইহার অবতরণ হউক, আমিও (স্ত্রীরত্ন আনয়নরূপ) মনোহিত কর্ম সম্পাদন করি। সায়ংসন্ধ্যার সময়ও প্রায় অতীত হইয়াছে। যেহেতু সম্প্রতি—

(১১) আকাশের দৃষ্টিসীমাবর্তী প্রদেশগুলি তমালস্তবকশ্রেণীর ন্যায় অন্ধকার লতায় আচ্ছাদিত হইতেছে। পৃথিবী যেন পর্যন্তভাগ নিম্নত্বনিবন্ধন অভিনব জলে নিমগ্ন হইতেছে এবং ত্রিযামা (রাত্রি) আরম্ভেও বাত্যার সংবেগে

इति परिक्रम्य निष्क्रान्ता ॥ (१२)

विष्कम्भकः ॥ (१३)

ततः प्रविशति यथानिर्दिष्टो माधवः ॥ (१४)

[ साशंसम् । ] माध ।

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढ़रागोदया-

स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।

---

जायते । एवं रात्रिरपि प्रदोषकाल एव वातावलिविस्तारितमण्डलाकारपरिव्याप्तस्फीतवनान्तर्वर्त्तिं धूमराशिसदृशं स्वकीयनीलत्वं निशीथतुल्यगाढ़ावस्थां प्रापयतीति सरलार्थः ।

अत्र तापिञ्छगुच्छावलिभिरिवेत्युपमा, मज्जतीवेति क्रियोत्प्रेक्षा, धूम्याप्रकाशमिति लुप्तोपमालङ्कार इत्येतेषां परस्परनैरपेक्ष्येण संसृष्टिः । स्रग्धरा वृत्तम् ॥

(१२) इतीति । परिक्रम्य रङ्गभूमौ परिभ्रम्य निष्क्रान्ता बहिर्गता कपालकुण्डलेति शेषः ।

(१३) विष्कम्भक इति । विष्कम्भकस्य लक्षणमुक्तम । कपालकुण्डलालापेन करालायै स्त्रीरत्नोपहारदानरूपस्याघोरघण्टसङ्कल्पस्य तदर्थं करालायतने समाप्तपुरश्चरणक्रियाघोरघण्टसन्निधानस्य महामांसविक्रयार्थं तत्र माधवप्रवेशस्य च वृत्तकथांशस्य वर्त्तिस्यमानानाञ्च मालत्यानयनादीनां निदर्शनाद्त्र तल्लक्षणसमन्वयः । कपालकुण्डलारूपमध्यमपात्रप्रयोजयितत्वाच्चात्र "शुद्धविष्कम्भकः" क्वचित् पुस्तके "इति शुद्धविष्कम्भक" इत्येव पाठः । तल्लक्षणं यथा दर्पणे—

मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः । शुद्धः स्यात्............" इति ॥

(१४) तत इति । यथानिर्दिष्टः कपालकुण्डलानिरूपितरूपः गलद्रुधिरः वामहस्तेन नरमांसखण्डं दक्षिणहस्तेन कृपाणञ्च धारयन्नित्यर्थः ।

(१५) माधेति । साशंसं—आशंसया यत्कृते मांसविक्रयरूपं दुष्करं कर्मचिकीर्षितं तत् प्रार्थनया सह यथा स्यात्तथा प्राहेत्यर्थः ।

(१६) प्रेमेति । प्रमत्ता अङ्कुरितावस्थानुरागविलापेन "परस्पराश्रयणं निरूढं भावबन्धनम् । यद्देकायत्ततोपाधि तत् प्रेमेति निगद्यते" इति लक्षणलक्षितेनेति यावत् । आर्द्राः सरसाः, तथा

---

सर्वतো বিস্তৃত মণ্ডলাকারে স্থিত ও স্ফীত ধূমসমূহের ন্যায় নিজ নীলিমাকে বনাভ্যন্তরে প্রদোষকালেই গাঢ়াবস্থাপন্ন করিতেছে।

(১২) (রঙ্গভূমি পরিভ্রমণ করিয়া কপালকুণ্ডলার প্রস্থান)।

(১৪) (তৎপরে বামহস্তে নরমাংসখণ্ড ও দক্ষিণ হস্তে খড়্গ ধারণ করিয়া মাধবের প্রবেশ)।

यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणात्
आशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः* ॥ (१६)

---

प्रणयं प्रकर्षेणादादितं प्रेमाणं ( उपचारैर्मिथो यूनोर्यद्बाह्याभ्यन्तराभिधैः । प्रेमणीयं प्रकर्षेणैव स एव प्रणयः स्मृतः ॥" इति भरतः )। स्पृशन्ति भजन्त इति प्रणयस्पृशः, तथा परिचयात् पुनः-पुनर्दर्शनस्पर्शनसम्भाषणादिभिर्विशेषतः परिज्ञातत्वात् उद्गाढस्य अतिप्रौढस्य अनुरागस्य उदयः वृद्धी यासु तास्तथाभूताः, निसर्गमधुराः स्वभावरमणीयाः, मुग्धदृशः मनोहरदर्शनायास्तस्या मालत्याः ताश्चाः पूर्वानुभूताः चेष्टाः लीलाविलासकटाक्षविक्षेपादिव्यापाराः मयि भवेयुः पुनरपि भूयासुरित्याशंसायां लिङ्। यासु चेष्टासु आशंसया आशंसामात्रेण कल्पितासु निर्मितासु एवमस्याः कटाक्षविक्षेपादिकमनुभवेयमिति सङ्कल्पमात्रोपनीतासु अपि का कथा यथार्थरूपास्विन्द्यपेरर्थः । क्षणात् तत्क्षणात् सङ्कल्पक्षणादेवेत्यर्थः, बाह्यकरणानां बहिरिन्द्रियाणां चक्षुरादीनां ("करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः )। यो व्यापारः रूपादिस्वस्वविषय-ग्रहणशक्तिः तं रोद्धुं कार्याक्षमं कर्त्तुं शीलं यस्य सः तथाभूतः, सान्द्रः घनतीव गाढः आनन्दः सुखं यत्र स आनन्दसान्द्रः ( अन्याहितादीनीति सान्द्रशब्दस्य परनिपातः )। अन्तःकरणस्य चित्तस्य लयः लीनत्वं तदेकनिष्ठत्वमिति यावत्, भवति जायते ।

कल्पनामात्रोपनीतासु अपि यासु मालत्या विक्षेपादिचेष्टासु चित्तस्य तत्क्षणात् तन्मयता जायत इति चित्तसम्बन्धविरहेण तत्परवशैश्चक्षुरादिबहिरिन्द्रियैः सन्निकृष्टस्यापि विषयस्य प्रत्यक्षं न भवति, परन्तु केवलमनिर्वचनीयः कश्चित् अविच्छिन्न आनन्द एव उत्पद्यते स्वभाव-रमणीयास्ताश्चेष्टा यदि यथार्थतो लभेरंस्तदा कीदृशमानन्दसागरे चिरनिमग्नः स्यामिति वदनमपि वक्तुं न शक्यत इति ताश्चेष्टाः सर्व्वदैव प्रार्थनीया इति भावार्थः ।

अत्र प्रेमार्द्रा इत्यादिभिः साभिप्रायविशेषणैः परिकरः, कल्पनोपनीतास्वपि चेष्टासु आनन्दातिशयो जायत इति यथार्थरूपासु चेष्टासु ततोऽप्यधिकतमानन्दस्योदयो भवेदित्यर्थ-स्यार्थतः प्राप्ततया अर्थापत्तिश्चालङ्कार इत्यनयोरङ्गाङ्गिभावेन सङ्करः । शार्द्दूलविक्रीडितं वृत्तम् ॥

---

(১৫।১৬) ভাব। (প্রার্থনার সহিত) মধুরিভাবস্বানুরাগে সরস প্রণয়স্পর্শী ও পরিচয়বশতঃ ক্রমশঃ গাঢ় অনুরাগযুক্ত এবং স্বভাবরমণীয় মনোহরদর্শনা মালতীর কটাক্ষবিক্ষেপাদি সেই সেই চেষ্টাগুলি গাঢ় প্রার্থনাবশতঃ কল্পিত হইলেও কল্পনাক্ষণেই চক্ষুরাদি বাহেন্দ্রিয়গণের স্ব স্ব বিষয় গ্রহণশক্তির বিলুপ্তি-কারক ও অতিশয় আনন্দবর্দ্ধক অন্তঃকরণের তন্ময় জন্মিয়া থাকে।

---

* क्वचित् पुस्तके "आनन्दसान्द्रोदय" इति पाठभेदः ।

सान्द्रं चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभिः
चिन्तासन्ततितन्तुजालनिविड़स्यूतेव लग्नाप्रिया ॥ (२१)

(२१) तन्मयत्वमेव द्रढ़यति—लीनेवेत्यादिना। या मदनोद्याने मय्यनुरागं दर्शितवती सा प्रिया मालती नः अस्माकं चेतसि मनसि लीनेव जलखवनन्यायेन लयं गतेव, नन्वेवं तस्यादर्शनमेव न स्यादित्यत आह—प्रतिविम्बितेवेति, विमलजले चन्द्रमण्डलवत्प्रतिफलितेवेत्यर्थः, नन्विदानीं सन्निकर्षाभावात् कथं चित्ते मालत्याः प्रतिविम्ब इत्यत आह—लिखितेवेति; कन्दर्पचित्रकरेण स्मृतितुलिकया अनुरागादिवर्णकेन मम चित्तपटे चित्रितेवेत्यर्थः। नन्वेवं पदार्थान्तरगोचरप्रत्ययसलिलादिना कदाचित् क्षालनमपि स्यादित्यरुचेराह—उत्कीर्णरूपेवेति, कन्दर्पशिल्पिना मम मनःशिलायां शरशलाकाभिरङ्कितसर्व्वावयवेत्यर्थः। ननु तादृशाकृतेरप्यसंस्काराद्दृश्यता स्यादित्यत आह—प्रत्युप्ते व चेति, विरहानलसन्तप्ते मम चित्तरूपाङ्गुरीयके मालतीरूपदिव्यमणिशिला- मनोजसुवर्णकारेण अर्द्धरोपितेवेत्यर्थः। नन्वर्द्धरोपितानामपि स्खलनं दृश्यत इति संयोगदार्ढ्यार्थमाह—वज्रलेपघटितेवेति, गुड़माषरसादिसंमिश्रणजनितसुदृढ़संयोगसम्पादकलेपविशेषो वज्रलेपः तेन घटितेव संयोजितेव, तथाच न स्खलनसम्भव इति भावः। नन्वेवं वज्रलेपान्तरितया मनसा तस्याः संस्पर्श एव न स्यादित्यरुचेराह—अन्तर्निखातेव चेति, यथा भूतलमध्ये रत्नादि निधीयते, तथा सापि अन्तर्म्मम चित्तमध्ये निखातेव निहितेवेत्यर्थः। नन्वेवं कदाचित्तदुत्तोलनमपि सम्भाव्यत इत्यत आह—कीलितेवेति, चेतोभुवः मनोजस्य ( अत्र चेतोभुव इत्यनेन तत्प्रभवस्य तस्य मर्म्मज्ञत्वं ध्वनितम् ) पञ्चभिः विशिखैः वाणैः कीलितेव दारुद्वयवदुभयतो वेधेन संयोजितेवेत्यर्थः। तथाच नानाशस्त्रैर्नोत्तोलनं सम्भवतीति भावः। ननु कीलितस्यापि प्रतिकीलनाद्विश्लेषः स्यादित्यत आह—चिन्तेति, चिन्तायाः

---

যে মদনোদ্যানে আমার প্রতি অনুরাগ প্রদর্শন করিয়াছিল, সেই প্রিয়তমা মালতী যেন আমার চিত্তে বিলীন হইয়া রহিয়াছে, অথবা ( জলে যেমন চন্দ্র প্রতিবিম্বিত হয়, সেইরূপ ) মালতী আমার চিত্তে প্রতিবিম্বিত হইতেছে। অথবা কামদেব যেন আমার চিন্তারূপ তুলিকা ও অনুরাগরূপ বর্ণ দ্বারা আমার চিত্তরূপ পটে মালতীকে চিত্রিত করিয়া রাখিয়াছে। অথবা কামরূপ শিল্পী শরশলাকা দ্বারা আমার চিত্তরূপ শিলাতলে মালতীর সর্ব্বাঙ্গ ক্ষোদিত করিয়া রাখিয়াছে। অথবা আমার বিরহসন্তপ্ত চিত্তরূপ অঙ্গুরীমধ্যে মালতীরূপ মহামণিকে অর্দ্ধরোপিত করিয়াছে। অথবা বজ্রলেপ দ্বারা গুড় ও মাষাদিরূপ দ্রব্যমিশ্রণে সমুৎপন্ন যে দ্রব্য দ্বারা দৃঢ়রূপে সংযোজিত করা যায়, তাহার নাম বজ্রলেপ

( नेपथ्ये कलकलः ) ( २२ )

माध। ( आकर्ण्य ) अहो सम्प्रति इतस्ततः प्रवर्त्तमानकौणप-निकरस्य महतो श्मशानवाटस्य रौद्रता। अत्र हि—( २३ )

पर्य्यन्तप्रतिरोधमेदुरघनस्त्यानं चिताज्योतिषा
मौज्ज्वल्यं परभागतः प्रकटयत्याभोगभीमं तमः।

---

मालतीविषयिण्याः स्मृतेः सन्ततिः प्रवाहः एव तन्तुजालं सूत्रसमूहः तेन निबिडं घनं यथा स्यात्तथा स्यूतेव सीवनं प्रापादितेव तथा निरन्तरानवरतसंसक्ता इति सर्व्वत्रान्वयः। तथा-चोक्तं तन्मयत्वं युक्तमेवेति भावः।

अत्र प्रकृताया मालत्या इवशब्देन उत्प्रेक्षणेनैकविधावस्तुसम्भावनाद्याभ्यां क्रियोत्प्रेक्षामाला, विशेषणानां साभिप्रायकत्वात् परिकरः, चिन्तासन्ततितन्तुजालेत्यत्र निरङ्गरूपकं इत्यनुप्रास-स्तादृशा इति तेषामङ्गाङ्गिभावेन सङ्करः। शार्द्दूलविक्रीडितं वृत्तम्।

( २२ ) नेपथ्य इति, कलकलः अव्यक्तशब्दः पिशाचानामुत्पन्न इति शेषः।

( २३ ) माध इति, इतस्ततः—चतुर्द्दिक्षु प्रवर्त्तमानः विचरन् कौणपनिकरः राक्षसानां समूहः यत्र तादृशस्य श्मशानवाटस्य श्मशानभूमेः रौद्रता भीषणता महती अतिशयं प्राप्ता। हि यस्मात् अत्र श्मशानवाटे।

( २४ ) रौद्रत्वमेव समर्थयितुमाह—पर्य्यन्तेति। पर्य्यन्ते चितानलप्रान्तदेशे प्रतिरोधि-

---

আমার চিত্তে সুদৃঢ়রূপে মালতীকে সংযোজিত করিয়া রাখিয়াছে। অথবা আমার চিত্তমধ্যে ভূগর্ভে নিখিল ন্যায় একেবারে পুতিয়া রাখিয়াছে। অথবা কাষ্ঠবজ্র যেমন তীক্ষ্ণাগ্রে লৌহ বিদ্ধ করিয়া সংযোজিত করে, সেইরূপ কামদেবের পাঁচটি বাণদ্বারা কামদেব মালতীকে আমার চিত্তে বিদ্ধ করিয়া রাখিয়াছে। অথবা চিন্তাসমূহরূপ সূত্রসমূহ দ্বারা মালতীকে আমার চিত্তে সেলাই করিয়া সংলগ্ন রাখিয়াছে।

( ২২ ) ( রঙ্গবহির্ভাগে পিশাচদিগের অব্যক্ত শব্দ )

( ২৩ ) মাধ। ( শ্রবণ করিয়া ) আহা সম্প্রতি এই শ্মশানপ্রদেশে চতুর্দিকে রাক্ষসগণ বিচরণ, সুতরাং ইহার অতিশয় ভীষণতা। যে হেতু এই শ্মশানক্ষেত্রে—

( ২৪ ) চিতানলের প্রান্ত দেশে ও দূরে নিরোধকারি স্নিগ্ধ গাঢ় ও বৃদ্ধি

संसक्ताकुलकेलयः किलकिलाकोलाहलैः सम्मदा-
दुत्ताला: कटपूतनाः प्रभृतयः सांराविणं कुर्व्वते ॥ ( २४ )

दृष्टिनिरोधशील चितानलप्रान्तभूमिमभ्याइय विद्यमानमित्यर्थः। मेदुरं स्निग्धं ( सान्द्रे स्निग्धे च मेदुर इत्यमरः ) पुनः सान्द्रं घनं वृद्धिं गतं ( विशेषणद्वययोः कर्म्मधारयसमासस्यानिष्टत्वादवोत्तरोत्तरस्य विशिष्टत्वविवक्षया क्रमशः द्वयोर्द्वयोः पदयोः कर्म्मधारयः कर्त्तव्यः ) एवं आभोगेन विस्तारेण बहुस्थानस्थितिसत्त्वेनेति यावत्, भीमं भीतिप्रदं तमः अन्धकारः ( कर्त्तृ ) परभागतः वर्णोत्कर्षतः चिताज्योतिषां चितानलानां औज्ज्वल्यं दीप्तिं प्रकटयति अतिशय्येन विकाशयति। दिवाद्यपादीनां दीप्तेः क्षीणत्वादन्धकार एव तदातिशय्यं भवतीति प्रत्यक्षमिद्धमनुसन्धेयम्। तथा सं सक्ता अविच्छेदेन संलग्नाः आकुलाः त्वरायुक्ताः केलयः क्रीड़ाः येषां ते तथाभूताः, उत्तालाः तालमुद्गताः परस्परं दत्ततालाः इति यावत्, ये कटानां शवानां पूतं शटितं गलितमांसमिति यावत्, नाथन्ते याचन्ते इति कटपूतनाः ( पृषोदरादित्वात् साधुः ) पिशाचविशेषाः तत्प्रभृतयः तत्सहिताः श्मशानवासिशृगालादय इत्यर्थः, सम्मदात् गाढ़ान्धकारोपस्थितिनिबन्धनानन्दात् किलकिलाकोलाहलैः किलकिलेत्याकारकार्य्यक्तशब्दैः सांराविणं सर्व्वतो व्याप्तमाक्रोशं ( अभिविधौ भावे इणुन् इत्तीणुनन्तात् रुधातोः स्वार्थे अन् ) कुर्व्वते। अत्यादेव श्मशानचे वस्यातिशयभीषणतेति भावः।

अत्र रौद्ररसः, तल्लक्षणं यथा भरते—

"इति-रौद्रो रसो दृष्टो रौद्रै रेवाङ्गचेष्टितैः।
शस्त्रप्रहारभूयिष्ठभयकम्पक्रियात्मक इति ॥"

तथा तमसः प्रकाशरूपविरुद्धक्रियोत्पत्तेर्विषमः तृतीयचरणे वृत्त्यनुप्रासश्चालङ्कार इति तयोः सङ्करः।

अत्र 'कोलाहलसांराविणशब्दयोर्व्वस्तुगत्यार्थभेदाभावेऽपि विशेषसामान्यभावेनोपादानान्नयंगतपुनरुक्ततादोष इति विभावनीयम्। शार्द्दूलविक्रीड़ितं वृत्तम् ॥

প্রাপ্ত এবং বহুস্থানব্যাপিত্বনিবন্ধন অতিভীতিপ্রদ অন্ধকার বর্ণের উৎকর্ষতা-বশতঃ চিতানলের দীপ্তি অতিশয় প্রকাশিত করিতেছে। এবং যাহাদের ত্বরা-যুক্ত ক্রীড়া অবিচ্ছেদেই সংলগ্ন থাকে, তাদৃশ পিশাচগণ ও শ্মশানবাসি শৃগালাদি প্রাণিসমূহ অন্ধকারাগমন জনিত আনন্দে উৎফুল্ল হইয়া কিলকিলাকার কোলা-হল দ্বারা দিগন্তব্যাপী শব্দ করিতেছে। ( অতএব এই শ্মশানপ্রদেশ অতি ভীষণ )

तदुच्चैराघोषयामि — भो भोः श्मशाननिकेतनाः कटपूतनाः !-(२५)

अशस्त्रपूतमव्याजं पुरुषाङ्गोपकल्पितम् ।
विक्रीयते महामांसं गृह्यतां गृह्यतामिदम् ॥ (२६)

(नेपथ्ये पुनः कलकलः)

माध । कथमाघोषणानन्तरमेव सर्व्वतः समुच्चलदुत्तालवेताल-

---

(२५) तदिति, तस्मात् पिशाचानां आनन्दजननात् उच्चैराघोषयामि मांसविक्रयवार्त्तामुच्चैरावेद्य विज्ञापयामीत्यर्थः, अनुच्चैराघोषणे किलकिला कोलाहलसमाकुलत्वादिव नाकर्णयेयुरिति भावः । भो भो इति सम्भ्रमाह्वाने । श्मशानं निकेतनं निवासस्थानं येषां ते श्मशाननिकेतनाः ।

(२६) अशस्त्रेति, शस्त्रेण खड्गाद्याघातेन पूतं पवित्रं न भवतीत्यशस्त्रपूतं, (शस्त्रपूतमांसस्य पवित्रत्वेन पिशाचाद्यखाद्यत्वात् तदखाद्यत्वेन प्रोत्साहनाय विशेषणमिदम्) न विद्यते व्याजः कापट्यं यत्र तदव्याजं (यथार्थविक्रयार्थमेवानीतं न तु तत् प्रलोभनेन वशीकरणीय प्रेतान् प्रहर्त्तुमानीतमिति भावः) यद्वा "इष्टसिद्धिं फलीकृत्य साहसाद्यदुपार्जितं । अशस्त्रपूतं निर्व्याजमेतन्मांसं विदुर्बुधाः" इत्युक्तलक्षणम्, पुरुषाङ्गेन पुंशरीरस्यैवावयवविशेषेण उपकल्पितं सम्पादितं ("स्त्रियश्चतुष्पदे श्रेष्ठाः पुरुषा द्विपदे तथा" इत्यादि शास्त्रात् उत्कृष्टतरता द्योतनाय विशेषणमिदम्) इदं मदीयहस्तस्थितं महामांसं नरमांसं मया विक्रीयते, इष्टविशेषसाधनाङ्गीकाररूपमूल्येनेति शेषः । गृह्यतां गृह्यतां तन्मूल्येन मदीयतां नीयताम् । (आदरातिशयद्योतनाय द्विरुक्तिः) ।

पुरुषाङ्गपदस्योपस्थपरतया एव लोकव्यवहारसिद्धत्वाद्व्रीडाव्यञ्जकत्वेनात्र "अश्लीलता"-दोषः, साभिप्रायविशेषणघटितत्वात् परिकरालङ्कारः ।

---

(২৫) অতএব আমি উচ্চৈঃস্বরে আহ্বান করিয়া মাংসবিক্রয়ের বার্ত্তা বিজ্ঞাপিত করি। হে শ্মশানবাসি পিশাচগণ !

(২৬) আমি (যৎ কিঞ্চিৎ ইষ্টসাধনাঙ্গীকাররূপ মূল্যে) আমার এই হস্তস্থিত মহামাংস বিক্রয় করিতেছি, তোমরা গ্রহণ কর, গ্রহণ কর। আমি যে মাংস বিক্রয় করিতেছি, তাহা শস্ত্রপূত নহে, এবং কোনরূপ কপটতাপূর্ণ নহে, পরন্তু পুরুষের শরীর সম্পাদিত। (সুতরাং তোমাদের গ্রহণে কোনও আপত্তির কারণ নাই

मुक्ततुमुलाव्यक्तकलकलाकुलः प्रचलित इवाविर्भवद्भूतसङ्कटः श्मशानवाटः। आश्चर्य्यम्। (२७)

कर्णाभ्यर्णविदीर्णसृक्कविकटव्यादानदीप्ताग्निभिः
दंष्ट्राकोटिविसङ्कटैरित इतो धावद्भिराकीर्य्यते।
विद्युत्पुञ्जनिकाशकेशनयनभ्रूश्मश्रुजालैर्नभो
लक्ष्यालक्ष्यविशुष्कदीर्घवपुषामुल्कामुखानां मुखैः॥ (२८)

---

(२७) माधेति, सर्व्वतः समुच्चलन्तः विचरन्तः उत्तालाः विकराला ये वेतालाः भूताधिष्ठितशवाः तैर्मुक्तेन त्यक्तेन कृतेनेति यावत्, तुमुलेन सङ्कीर्णेन अव्यक्तेन स्फुटं अविभाव्यमानेन च कलकलेन कोलाहलेन आकुलः। आविर्भवद्भिः तदानीमेव देशान्तरादुपस्थितैः भूतैः सङ्कटः सङ्कीर्णः श्मशानवाटः श्मशानप्रदेशः प्रचलित इव कम्पमान इव मया सम्भाव्यते इति शेषः।

(२८) सोत्कमाश्चर्य्यं समर्थयितुमाह—कर्णेति, कर्णयोरभ्यर्णं समीपं यावत् विदीर्णाभ्यां विपाटिताभ्यां सृक्कभ्यां ओष्ठप्रान्ताभ्यां यत् विकटव्यादानं भयङ्करमुखकुहरप्रकटनं तेन दीप्तः प्रकाशितः अग्निर्य्यैस्तैर्दंष्ट्राणां दन्तानां कोटिभिः अग्रैः विसङ्कटैः आकुलैः इत इतो धावद्भिः समन्ततो भ्रमद्भिः ( मुखगतोल्कातेजोभिर्मुखानामेव प्रधानतो दर्शनात्तदुच्चारणमुक्तम् ) तथा विद्युत्पुञ्जनिकाशानि सौदामिनीसमूहतुल्यपिङ्गलवर्णानि केशनखभ्रूश्मश्रुजालानि यत्र तादृशैः, लक्ष्याणि वदनव्यादनकाले वदनमध्यागतोल्काप्रकाशैर्दृश्यानि अलक्ष्याणि मुखसङ्कोचकाले तदुल्काप्रकाशाभावादन्धकाराच्छन्नत्वेनादृश्यानि, विशुष्काणि—अतिशयकृशानि दीर्घाणि च वपूंषि शरीराणि येषां तथाभूतानां उल्कामुखानां यथार्थनामकपिशाचविशेषाणां मुखैः वदनैः नभः आकाशं आकीर्य्यते व्याप्यते। तथाच एवम्विधालौकिकदर्शनमतीवाश्चर्य्यकरमिति भावः।

---

( রঙ্গের বহির্ভাগে পুনরায় কোলাহল )

(২৭) মাধ। একি আমি আহ্বান করিয়া মাংসবিক্রয়ের কথা বলার পরেই কেন সর্ব্বত্র ধাবমান ভূতাধিষ্ঠিত শবগণের তুমুল ও অব্যক্ত কোলাহলে সমাকুল এবং দেশান্তর হইতে তৎকালোপস্থিত ভূতগণে সমাচ্ছন্ন এই শ্মশান-প্রদেশ যেন কম্পিত বলিয়া মনে হইতেছে। আরও আশ্চর্য্য এই যে—

(২৮) কর্ণ সমীপ পর্য্যন্ত বিপাটিত ওষ্ঠপ্রান্ত দ্বারা বিকট ব্যাদান করিলে যাহাতে অগ্নি প্রদীপ্ত হয়, যাহাদের কেশ, নয়ন, ভ্রূ ও শ্মশ্রুজাল বিদ্যুৎসমূহের ন্যায়

अपिच—

एतत् पूतनचक्रमक्रमक्लतग्रासार्द्धमुक्तैर्मुखा-
नुत्पुच्छत्परितो नृमांसविघसैराघर्घरं क्रन्दतः ।
खर्जूरद्रुमदघ्नजङ्घमसितत्वङ्नद्धविष्वक्तत-
स्नायुग्रन्थिघनास्थिपञ्जरजरत्कङ्कालमालोक्यते ॥ (२८)

---

अत्र स्वभावोक्तिरलङ्कारः, स च विद्युदुज्ज्वलिकायोदृपनया प्रथमद्वितीयचरणयोश्छेकानु-प्रासेन तृतीयचरणस्थच्छेकानुप्रासेन च सङ्कीर्य्यते। शार्द्दूलविक्रीड़ितं वृत्तम् ॥

(२८) एतदिति. परितः सर्व्वतः आघर्घरं ईषत् घर्घरशब्दाकारं यथा स्यात्तथा क्रन्दतः आक्रन्दनं कुर्व्वतः उत्कान् कौतुकान् ( कौतुक ईहायामेव उत्क इत्यमरः ) अक्रमेण ( अति-बुभुक्षया प्रतिबन्धकतया वा ) यौगपद्येन कृतान् ग्रासान् कवलान् अर्द्धमुक्तैः आधिक्येन वदन-विवरे स्थानाभावात् भूमौ पतितार्द्धैः नृमांसविघसैः नरमांसस्य भुक्तावशेषैः ( भुक्तं विघसो यज्ञशेषभोजनशेषयोरित्यमरः ) उत्पुच्छान् पुच्छान् कुर्व्वत्। खर्जूरद्रुमदघ्नाः खर्जुरवृक्षप्रमाणाः (एतेन जङ्घानां दैर्घ्यदौर्बल्यकर्कशत्वादीनि सूचितानि) जङ्घा यस्य तादृशम् । तथा असितत्वचा-कृष्णवर्णचर्म्मणा नद्धाः बद्धाः आच्छादिता इति यावत्, विष्वक्ततः सर्व्वतो व्याप्ता ये स्नायुग्रन्थयः शिराबन्धनानि तैः घनानि निविडानि रक्तमांसादिशून्यतया पुञ्जीभूतानीति यावत्, अस्थि-पञ्जराणि पञ्जरवत्प्रतीयमानानि अस्थीनि येषु तादृशा जरन्तः दीर्घजीवित्वात् जीर्णाः कङ्कालाः सर्व्वशरीरास्थीनि ( स्यात् शरीरास्थि कङ्काल इत्यमरः ) यस्य तादृशं एतत् पूतनचक्रं पिशाच-विशेषसमूहः आलोक्यते मया इत्यर्थः

---

পিঙ্গলবর্ণ দন্তাগ্রশ্মশ্রু ও ইতস্ততঃ প্রকম্পিত উত্তাপূর্ণ নারকপিশাচদিগের তাদৃশ মুখমণ্ডল দ্বারা আকাশ পরিব্যাপ্ত হইতেছে। এবং ঐ পিশাচগণের অতি কৃশ ও দীর্ঘ শরীর মুখব্যাদানকালে উত্তালোকে পরিলক্ষিত হইতেছে ও মুখ-ব্যাদানকালে অন্ধকারে অদৃশ্য হইতেছে।

(২৯) যাহারা ঘর্ঘর ঈষদাকার ক্রন্দনশীল বুভুক্ষার অতি বুভুক্ষা বা প্রতিবন্ধের আশঙ্কা বশতঃ একবারে কৃত অনেক গ্রাস হইতে ( বদনবিবরে স্থান না পাওয়ায় ) ভূমিনিপতিত ভুক্তাবশেষ নরমাংস দ্বারা অর্দ্ধ পরিমাণে পুষ্ট করিতেছে, এবং যাহাদের জঙ্ঘাগুলি খর্জুর গাছের ন্যায় লম্বা ও জীর্ণ শরীরের অতি কৃষ্ণবর্ণ চর্ম্মাবৃত ও সর্ব্বতোব্যাপ্ত শিরাবন্ধনে পুঞ্জীভূত অস্থিপঞ্জর

अपिच—

निष्टापस्विद्यदस्थ्नः क्वथनपरिगलन्मेदसः प्रेतकायान्
कृष्ट्वा संसक्तधूमानपि कुणपभुजो भूयसीभ्यश्चिताभ्यः ।
उत्पक्वस्रंसिमांसं प्रचलदुभयतः सन्धिनिर्मुक्तमारा-
देते निष्कृष्य जङ्घानलकमुदयिनोर्मज्जधाराः पिबन्ति ॥ (३४)

---

कटिस्थमांसपिन्डौ (स्त्रियां स्फिचौ कटिप्रोथावित्यमरः) पृष्ठपीठं पीठवद्विशालकायपश्चाद्भागः तानि आदयो येषां तथाभूताः ये अवयवाः तेषु शरीरस्य मांसलावयवेष्वित्यर्थः सुलभानि अनायासलभ्यानि मांसानि जग्ध्वा भक्षयित्वा अङ्कस्थात् क्रोड़ीकृतात् करङ्कात् (आकृष्येति ल्यब्लोपे पञ्चमी) मस्तकात् (करङ्को मस्तके शस्ये नारिकेलफलास्थनीति विश्वः) अस्थिसंस्थं अस्थिषु लग्नं तथास्थिपुटगतमपि निम्नोन्नतस्थानलग्नमपि क्रव्यं मांसं (पिशितं तरसं मांसं पललं क्रव्यमामिषमित्यमरः) अव्यग्रं क्षुधामान्द्यात् क्रोड़ीकृतत्वेनान्यग्रहणासम्भवाच्च त्वरारहितं यथा स्यात्तथा अत्ति भक्षयति ।

अत्र वीभत्सो रसः। अतएव परुषवर्णबाहुल्यात् स्थितमपि दुःश्रवत्वं न दोषः, प्रत्युत गुण एव। तथाचोक्तं दर्पणे—

"वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते ।
रौद्रादौ तु रसे नित्यं दुःश्रवत्वं गुणो भवेत् ॥"

अत्र स्वभावोक्तिरर्थालङ्कारः, क्रव्यमव्यग्रमित्यत्र च्छेकानुप्रासः, सर्व्वेष्वेव चरणेषु वृत्त्यनुप्रास इति तेषां संसृष्टिः। स्रग्धरा वृत्तम् ॥

(३४) निष्टापेति, एते कुणपभुजः शवाशिनः (कुणपः शवमस्त्रियामित्यमरः) पिशाचविशेषाः भूयसीभ्यः बह्वीभ्यः चिताभ्यः निःशेषेण तापो निष्टापः (निसस्तपनव्याहृत्ताविति षत्वम्)

---

(৩৪) আরও এই শবাশী পিশাচসকল চিতাগ্নির নাতিশয় উত্তাপে যাহার অস্থি হইতে মজ্জা ক্ষরিত হইতেছে ও অগ্নির পাকবশে সকল অবয়ব হইতে মেদ (মাংসজ স্নেহ দ্রব্যবিশেষ) বিগলিত হইতেছে, ধূমসংযুক্ত তাদৃশ মৃত দেহসকল বহুচিতা হইতে আকর্ষণ করিয়া পরে উৎকট পাকবশে বিগলিত মাংস অগ্নির উত্তাপে কিঞ্চিৎ কম্পমান এবং উর্দ্ধ অধোভাগের সন্ধিস্থান হইতে বিশ্লিষ্ট জঙ্ঘাকাণ্ড সেই সকল মৃত দেহ হইতে পৃথক্ করতঃ নিজের সমীপে আনিয়া তাহা হইতে নিঃসৃত মজ্জধারা পান করিতেছে।

( विहस्य ) अहो ! प्रादोषिकः प्रमोदः पिशाचाङ्गनानाम् ।
तथाहि—(३५)

अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः ।

---

चितानलस्य सम्पुटादेन स्विद्यन्ति चर्म्माण्यस्थीनि येषां तान्, छदनेन पाकविशेषेण परिक्लिन् सर्व्वतः संसनानं स्वेदः वसानांसमक्षेदविशेष इति यावत्, तेभ्यः तान्, तथा संसक्त भान् दह्यमानत्वेन संलग्नधूमान् अपि (न केवलं असंलग्नधूमानित्यपेरर्थः) प्रेत-कायान् मृतशरीराणि, कृत्वा आकृष्य, उत्पक्वेन अतिमन्दपाकेन (उत्पूर्व्वात् पचधातोर्भावे क्तः) संधि विगलत् मांसं यस्मात् तत् प्रचलत्पवक्रितपिशितस्यन्दनानं तथा उभयत ऊर्द्धाधोभागयोर्या सन्धौ संयोगस्थाने ताभ्यां निर्म्मुक्तं विश्लिष्टं, नलकानलकं नलकास्थि आरात् समीपे (आराद् दूरसमीपयोरित्यमरः) निष्कृष्य तत्प्रेतकायात् पृथक्कृत्य समानीय उदयिनीः तस्मादेव स्रवन्तीः मज्जधाराः अस्थिमध्यस्थितघनस्निग्धधाराः पिबन्ति ।

अनेन वर्णनेन तदानीं सर्व्वाङ्गदाहस्य चितानलनिर्व्वापणस्य च व्यवहारः प्रायो नासीदिति प्रतिभाति, अन्यदा एतादृग्वर्णनायाः कविप्रसिद्ध्यनवादुक्तिकत्वादिति विभावनीयं ।

अत्रापि पूर्व्ववदेव बीभत्सो रसः, दुःश्रवत्वञ्च न दोषः । स्वभावोक्तिरलङ्कारः । स्रग्-धरा वृत्तम् ॥

(३५) विहस्येति, अहो इत्याश्चर्य्ये, प्रादोषिकः रजनीमुखसम्बन्धः प्रमोदः प्रकृष्टो हर्षः ।

(३६) अन्त्रैरिति, अन्त्रैः नाडीविशेषैः (अन्त्रं पुरीतदित्यमरः) कल्पिताः रचिताः मङ्गलप्रतिसराः शुभकालभवनमङ्गलचिह्नसूत्राणि वाहुप्रकरसूत्राणि वा (कङ्कणे करसूत्रे च भवेत् प्रतिसरोऽस्त्रियामिति मेदिनीकारः) यासितासां, स्त्रीणां मृतावलानाम् हस्ता एव रक्तोत्पलानि तान्येव व्यक्तान् स्पष्टतयाऽवस्थितदर्शनान् उत्तंसान् कर्णभूषणानि (उत्तंसः कर्णपूरे स्यात् शेखरे च वतंसवदिति विश्वः । विभ्रतीति तथोक्ताः, तथा लोहितपङ्काः घनीभूतवसाशरीररक्तानि

---

(৩৫) (হাস্য করিয়া) পিশাচাঙ্গনাদিগের প্রদোষকালীন আমোদ কি অপূর্ব্ব।

(৩৬) যাহারা পুরীতৎ নাড়ী দ্বারা মঙ্গলসূত্র অনেক চিহ্ন কঙ্কণ বা কঙ্কণ রচনা করিয়াছে, ও মৃত স্ত্রীলোকের হস্তরূপ রক্তপদ্ম দ্বারা কর্ণভূষণ

एताः शोणितपङ्ककुङ्कुमजुषः सम्भूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥ (३६)

( परिक्रम्य पुनरशस्त्रपूतमित्यादि पठित्वा ) कथं नामातिभीषण-
विभीषिकाविकारैः झटित्यपक्रान्तं पिशाचैः। अहो! निःसत्त्वता

---

एव कुङ्कुमानि तानि जुषन्ते सेवन्ते इति तथोक्ताः, एताः दृश्यमानाः पिशाचाङ्गनाः हृन्दि पङ्कजाकाराभ्यन्तरवर्त्तिमांसविशेषा एव पुण्डरीकाणि श्वेतपद्मानि तेषां स्रजः मालाः पिनह्य कण्ठे धारयित्वा सहसा हठात् अथवा हास्ययुक्ताः सत्यः कान्तैः स्वस्वपतिभिः सम्भूय मिलित्वा प्रीताः सन्तुष्टाः सत्यः कपालानि मांसहीननरमस्तकोर्द्धभागास्थीनि एव चषकाणि पानपात्राणि तैः अस्थिस्नेहाः मज्जानि एव सुराः मद्यानि ताः पिबन्ति।

अत्रान्वादीनां मङ्गलप्रतिसराद्यभेदारोपात् रूपकालङ्कारः, एवं प्रतीयमानस्य सम्भोग-शृङ्गाररसस्य प्रधानीभूतवीभत्सरसाङ्गभावेनावस्थानात् रसवदलङ्कारश्चेति तयोरङ्गाङ्गिभावेन सङ्करः। विरुद्धयोः शृङ्गारवीभत्सयोः कथमत्र समावेश इति तु नाशङ्कनीयं, उभयोस्तुल्य-रूपेणावस्थान एव विरोधाङ्गीकारादत्राङ्गाङ्गिभावेनावस्थाने विरोधविरहात्। तथाचोक्तं ध्वनिकृता—

"विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम्।
बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला॥"

"यतिः सर्व्वत्र पादान्ते" इत्यनेन तृतीयचरणेऽपि यतेरावश्यकत्वात् "पिबन्तीत्यस्य" तृतीय-चतुर्थपादगत्वेन यतिभङ्गदोषोऽप्यत्र नाशङ्कनीयः "पूर्व्वान्तवत् स्वरःसन्धौ क्वचिदेव परादिवत्"-दित्यनेन "स्कन्धं विन्ध्याद्रिबुद्ध्या निकषति महिषस्याहितोऽस्तु प्रयास"मित्यादाविव सन्ध्या-देशस्य परादिवद्भावेन यतिभङ्गदोषासम्भवादित्यनुसन्धेयम्। शार्द्दूलविक्रीड़ितं वृत्तम्॥

( ३७ ) परिक्रम्येति परिक्रम्य विशेषतः पिशाचानवलोकयितुं पादौ विक्षिप्य पुनरशस्त्र-पूतमित्यादेः पठनं प्रथमपठनानन्तरोपगतानामनवधानेनाश्रुतपूर्व्वाणां वा पिशाचानानवगत्यर्थ-

---

রূপে ধারণ করিয়াছে, এবং যাহারা ঘনীভূত মৃত শরীরের রক্ত কুঙ্কুমরূপে ব্যবহার করিতেছে, তাদৃশ এই পিশাচপত্নীগণ হৃৎপিণ্ডরূপ শ্বেতপদ্মের মালা ধারণ করিয়া সহসা স্ব স্ব পতির সহিত মিলিত হইয়া অতি প্রীতমনে নরকপাল-রূপ পানপাত্রে মজ্জারূপ মদ্যপান করিতেছে।

(৩৭) (পাদবিক্ষেপ করিয়া পুনরায় "অশস্ত্রপূতমিত্যাদি শ্লোক পাঠ

अन्तःशीर्णकरङ्ककर्परतरत्संरोधिकूलद्रुम-
स्रोतोनिर्गमघोरघर्घररवा पारेश्मशानं सरित् ॥ (३८)

(नेपथ्ये) हा ताद! णिक्करुण! एसो दाणिं दे णरेन्द-
चित्ताराहणोवअरणं जणो विवज्जइ। (क)

---

(क) हा तात! निष्करुण! एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते।

---

भीषणैः तटैः तीरप्रदेशैः उपलक्षिता। तथा अन्तरभ्यन्तरे शीर्णानां त्रुटितानां करङ्काणां कपालानां कर्परैः भग्नावयवैः (कर्परो भग्नभाण्डेऽपि कटाहेऽपि खण्डितेऽपि चेति धरणिः) तरत् तत्, अतएव तरतां अवतरणशीलानां संरोधि अवरोधकं, तथा कूलं तीरं द्रवति भनक्तीति कूलद्रुम् (सर्वकूलाभ्रकरीषेषु कषः इति खप्रत्ययः) यत् स्रोतः (अत्रापि परस्परस्य विशेषणविशेष्यतया कर्मधारयद्वयं कर्त्तव्यम्) तस्य निर्गमेण तीराभ्यन्तरदेशाभिःसरणेन घोरः भयङ्करः रवः शब्दः यस्याः सा तथाभूता सरित् श्मशानस्य पारे पर्यन्ते इति पारेश्मशानं (पारे मध्ये षष्ठ्या वेत्यव्ययीभावः) दृश्यत इति शेषः। तथाच पुरत एव नद्या वर्त्तमानत्वादतः परं श्मशानं नास्तीति स्पष्टमव-गम्यते, अत्रच पिशाचो नोपलभ्यत इत्यनानुपं साहसं कुर्व्वतोऽपि मम नाभिप्रेतसिद्धिसम्भावनेति भावः।

उत्तररामचरितक्रौञ्चावतगिरिवर्णने अस्य श्लोकस्य प्रथमचरणं प्रायस्तुल्यरूपं दृश्यते, "घूत्कारसंवेल्लित" इत्यत्र "घूत्कारवत्कीचके"ति पाठभेदः।

अत्र श्लोकार्थस्य भयङ्करत्वाद्दुःश्रवत्वं न दोषः, किन्तु शब्दार्थवाचकक्रन्दधातोः शब्दार्थे प्रयोगादवाचकत्वदोषः। छेकानुप्रासवृत्त्यनुप्रासालङ्कारयोः सङ्करः। शार्दूलविक्रीड़ितं छन्दः॥

(क) नेपथ्य इति, नरेन्द्रचित्ताराधनोपकरणं नृपतिमानससन्तोषहेतुभूतः, नतु तव-स्नेहास्पद इत्यर्थः, एषः मल्लक्षणो जनः विपद्यते म्रियते। (मालत्या उक्तिरियम्)

---

অভ্যন্তর শীর্ণ নরকপালের ভগ্নাবয়বদ্বারা অবতরণকারি ব্যক্তিদিগের অবরোধক ও কূলবিদারণকারি স্রোতের নির্গমশব্দে অতি ভীষণ, তাদৃশ এই নদী শ্মশানের সীমায় দেখা যাইতেছে।

(ক) হা পিতঃ! নিষ্করুণ! তোমার রাজচিত্ত সন্তোষসাধনের উপকরণ-স্বরূপ আমি এই মরিতেছি।

राहणोवअरणं जणो विवज्जइ। हा अम्ब! सिणेहमअहिअए! तुमं वि हदासि देव्वदुव्विलसिदेण। हा मालदीमअजीविदे! मम कल्लाणसाहणेक्कसुहसअलवावारे! भअवदि! कामन्दइ! चिरस्स जाणाविदासि दुक्खं सिणेहेण। हा पिअसहि! लवङ्गिए! सिविणअवसरमेत्तदंसणा अहं दे संवुत्ता! (ख)

---

(ख) हा तात! निष्कृप! एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते। हा अम्ब! स्नेहमयहृदये! त्वमपि हतासि दैवदुर्विलसितेन। हा मालतीमयजीविते! मम कल्याणसाधनैकसुखसकलव्यापारे! भगवति! कामन्दकि! चिरस्य ज्ञापितासि दुःखं स्नेहेन। हा प्रियसखि! लवङ्गिके! स्वप्नावसरमात्रदर्शना अहं ते संवृत्ता।

---

(ख) तातेति, नरेन्द्रचित्ताराधनोपकरणनिष्कृपेन कन्यात्वेन मयि तव स्नेहविरहादेव मन्मरणे तव सनिष्ठं दुःखं न भवेदिति सूचितम्। दैवदुर्विलसितेन विधातुर्दुराचरणेन। तथाच मयि बद्धस्नेहायास्तव मन्मरणे जीवनधारणमेवासह्यं भवेदिति भावः। मम कल्याणस्य माधवेन सह विवाहरूपस्य मङ्गलस्य साधनं सम्पादनमेव एकं अद्वितीयं सुखं साध्यतया सुखं यस्य तादृशः सकलः व्यापारः क्रिया यस्याः तत्सम्बोधनं। स्नेहेन (मयोक्तरूपं) (त्वं मदीयस्नेहवशा) दुःखं क्लेशं चिरस्य ज्ञापितासि अनुभाविताऽसि। (मदीयकल्याणसाधननैक सुखत्वेन मन्मनोऽभिलाषसम्पादनादिना च सर्वे कार्ये कृतं त्वया मन्मरणे यदसहनीयं दुःखं भवेत् तदापि तदानन्दरूपं स्यादिति मयि निष्कारणस्नेह एव तवानर्थहेतुरिति इत्यर्थः)। स्वप्नावसरमात्रे केवलं स्वप्नसमये दर्शनं प्रत्यक्षं यस्याः तादृशी। मामनुवर्त्तेन तावदेव स्वाप्नवत् दर्शनं, मम मरणात् चिरमभिलाषोदयस्वप्ने पुनर्मद्दर्शनलाभसम्भवादिति भावः।

कपालकुण्डला नाम गाथादिकाः। "चामुण्डे भगवति" इत्येतद्दर्शनवद्वदत्।

---

(খ) হা তাত নিষ্করুণ! তোমার রাজচিত্তারাধনের উপকরণস্বরূপ আমি এই মরিতেছি। হা মাতঃ! স্নেহময়হৃদয়ে! তুমিও বিধাতার দুরাচরণে হত হইতেছ। হা মালতীময়জীবিতে! ভগবতি! কামন্দকি! আমার কল্যাণসাধনই তোমার সমস্ত ব্যাপারের একমাত্র ফল ছিল। সুতরাং সেই তোমাকে চিরকালের জন্য দুঃখ অনুভব করাইবে। হা প্রিয়সখি লবঙ্গিকে, একমাত্র স্বপ্নকালেই তুমি আমাকে দেখিতে পাইবে।

माध। महाभागे! न भेतव्यम् न भेतव्यम्।

मरणसमये त्यक्त्वा शङ्कां प्रलापनिरर्गल-
प्रकटितनिजस्नेहः सोऽयं सखा पुर एव ते।
सुतनु! विसृजोत्कम्पं सम्प्रत्यसाविह पाप्मनः
फलमनुभवत्युग्रं पापः प्रतीपविपाकिनः॥ (५७)

---

जीवनान्तसमये अतर्कितोपगतं प्राणवल्लभं माधवं दृष्टवत्या मालत्या जीवनभयेन कृते समालिङ्गने लज्जादिकं न प्रतिबन्धकं भवितुमर्हतीति तदालिङ्गनं न स्वभावविरुद्धमिति मन्तव्यम्।

(५७) मरणेति। मरणसमये तवास्मिन् सम्भावितमृत्युकाले प्रलापेन "हा दयित! नाह माह्व!" इत्यादि सकरुणवाक्येन निरर्गलं निष्प्रतिबन्धं यथा स्यात्तथा प्रकटितः प्रकाशितः निजः स्वकीयः स्नेहः यस्य, तथाभूतः अयं स दृष्टपूर्व्वं इत्यर्थः, ते तव सखा शङ्कां आत्मनो मरणभयं त्यक्त्वा परित्यज्य पुर एव सम्मुखे एव वर्त्तत इति शेषः। अत एव हे सुतनु! शोभनाङ्गि! उत्कम्पं छेदनत्रासजनितकम्पनं विसृज विमुञ्च। असौ पापः अपध्यस्त्रीवधोपक्रमात् पापकारी कापालिकः सम्प्रति अधुनैव इह अस्मिन् स्थाने तव पुरत एवेत्यर्थः, प्रतीपविपाकिनः विपरीतपरिणामशालिनः पाप्मनः त्वद्वधोपक्रमरूपस्य पापस्य उग्रं भीषणं फलं आत्मविनाशरूपं अनुभवति लभते। अधुना त्वत्पुरत एवैनमहं व्यापादयामिति तव मरणभयविगमात्तज्जनितवेपथुं विजहीहीति भावः।

अत्र वाक्यार्थहेतुककाव्यलिङ्गालङ्कारयोः सङ्करः। हरिणीवृत्तम्।

---

(ঘ) মাল। হে মহানুভব মাধব! তুমি আমাকে পরিত্রাণ কর। (এই কথা বলিয়া মাধবকে আলিঙ্গন করিল)।

(৫৭) মাধ। মহাভাগে! তুমি ভয় করিও না, ভয় করিও না, তোমার এই সম্ভাবিত মৃত্যুকালে "হা দয়িত মাধব"! ইত্যাদি সকরুণ বাক্য দ্বারা যাহার প্রতি তুমি নির্ব্বাধ ভাবে নিজের স্নেহ প্রকাশিত করিয়াছ, তোমার সেই প্রিয় সখা মাধব নিজের মৃত্যুভয় পরিত্যাগ করিয়া এই তোমার সম্মুখেই বর্ত্তমান। সুতনু! তুমি মরণভয়জনিত কম্প পরিত্যাগ কর। এই পাপকারী কাপালিক বিপরীত পরিণাম তোমার বধোদ্যমরূপ পাপের ফল এক্ষণেই এখানে (অর্থাৎ তোমার সম্মুখেই) অনুভব করিবে।

माध। [ सलज्जम् ] (६१)

त्वत्पाणिपङ्कजपरिग्रहपुण्यजन्मा
भूयासमित्यभिनिवेशकदर्थ्यमानः।
भ्राम्यन्न् मांसपणनाय, परेतभूमा-
वाकर्ण्य, भीरु! रुदितानि तवागतोऽस्मि॥ (६२)

---

(ङ) मालेति। अलिन्दस्य बहिर्द्वारप्रकोष्ठस्य "आटा" इति ख्यातस्य ( प्रघाणप्रघणालिन्द बहिर्द्वारप्रकोष्ठके इत्यमरः ) उपरि उपर्य्यलिन्द, प्रसुप्ता निद्रिता, इह अस्मिन् श्मशाने प्रबुद्ध विगतनिद्रा अस्मि। अलिन्दस्योपरि निद्रिताहं केनावानीतेति न जानामीत्यर्थः। क कस्मिन्निमित्ते इति यूयं पुनः अत्रागता इति शेषः। यूयं केन निमित्तेनात्रागता इत्यर्थः। (मालती निद्रितैव मायाप्रभावेन कपालकुण्डलया समानीतेत्यवधेयम्, कपालकुण्डलाकर्त्तृकस्योरानयनस्य पथ स्यैव विष्कम्भके सूचितत्वात् )।

(६१) सलज्जमिति, पिशाचेभ्यो नरमांसविक्रयरूपस्य स्वावलम्बितकुत्सितकर्म्मणः प्रकाश नीयत्वमेवात्र लज्जाहेतुः।

(६२) त्वदिति। हे भीरु! भयशीले! तव पाणिपङ्कजस्य परिग्रहेण पुण्यं पवित्र जन्म यस्य तथाभूतः, अहं भूयासं इति अभिनिवेशेन अभिसन्धानेन कदर्थ्यमानः कदर्थी क्रियमाणः ( करोत्यर्थेनन्तात् कदर्थशब्दात् कर्म्मणि शानच् ) परेतभूमौ अस्मिन् श्मशानदेशे नरमांस-विक्रयाय भ्राम्यन् पर्य्यटन् अहं तव रुदितानि "हा तात! निष्करुण!" इत्यादि विलाप वाक्यानि आकर्ण्य श्रुत्वा आगतोऽस्मि अस्मिन् करालानिलये उपस्थितोऽस्मि। त्वदीयक्रन्दन-ध्वनिसमाकुलितस्तत्परित्राणार्थमेवाहमत्र समागत इति भावः। अत्र पाणिपङ्कजेति लुप्तोपमा-लङ्कारः। वसन्ततिलका वृत्तम्।

---

( ঙ ) মাল। ( অনেক ক্ষণ পরে আশ্বস্ত হইয়া ) মহাভাগ! আমি কিছুই জানিনা, তবে এই মাত্র জানি যে, ঘরের ওটার উপরে নিদ্রিত ছিলাম এবং এই শ্মশানে জাগিয়াছি। ( সুতরাং আমাকে কিরূপে আনিয়াছে, তাহা আমি কিছুই জানি নাই। তুমি এস্থানে কি নিমিত্ত আসিলে ?

( ৬১ ) ( ৬২ ) মাধ। ( লজ্জার সহিত ) হে ভীরু, আমি তোমার পাণি-পঙ্কজ পরিগ্রহ দ্বারা পবিত্রজন্মা হইব, এই অভিসন্ধানে পিশাচদিগের নিকট নরমাংস বিক্রয়ের জন্ত এই শ্মশানক্ষেত্রে পর্য্যটন করিতে করিতে তোমার বিলাপবাক্য শুনিয়া উপস্থিত হইয়াছি।

अघो। रे रे ब्राह्मणडिम्भ! (६५)

व्याघ्राघ्रातमृगीकृपाकुलमृगन्यायेन, हिंसारुचेः
पाप! प्राणुपहारकेतनजुषः प्राप्तोऽसि मे गोचरम्।
सोऽहं प्रागभवतेव भूतजननीमृघ्नोमि, खड्गाहति-
च्छिन्नस्कन्धकबन्धरन्ध्ररुधिरप्राग्भारनिष्यन्दिना॥ (६६)

---

इति टप्रत्ययान्तादीप्रत्ययः) मुखगतां चन्द्रस्य कलामिव तद्वद्विपन्नामित्यर्थः, प्रेयसीं प्रियतमां मालतीं दैवात् शुभादृष्टवशात् समासाद्य प्राप्य, अस्य पुरोवर्त्तिनः दस्योः महासाहसिकस्य कापालिकस्य कृपाणपातविषयात् खड्गनिपातगोचरात् आच्छिन्दतः प्रसह्यानयतः मे मम चेतश्चित्तं आतङ्कात् यदहं चणात् परतोऽप्यागमिष्यम्, तदा किमभविष्यदित्याशङ्कातः, विकलं विह्वलं करुणया एतद्दुर्दर्शनसमुद्बोधितदयया द्रुतं द्रवीभूतं विस्मयात् ईदृग्घटनसंघटनजनिताश्चर्यात् विचोभितं उद्वेलितं क्रोधेन ईदृशीं ललनाकुलललामभूतां प्रत्ययैवमत्याचार इति रोषेण ज्वलितं उत्तेजितं तथा मुदा अचिन्त्योपनतैवं संरचणादिजनितानन्देन विकसितं प्रफुल्लं सत् कथं कीदृग्वर्त्तते। तदहमालोकयितुं न समर्थोऽस्मीति भावः।

अत्र हेतुषु पदद्वयं पञ्चम्यन्तं पदत्रयस्य तृतीयान्तमिति पञ्चम्यन्तपादोपक्रमभङ्गात्भग्नप्रक्रमताख्यदोषः।

अत्र चन्द्रकलामिवेति श्रौती उपमा। द्वितीयार्द्धे द्रुतमित्याद्यनेकक्रियाणां चेत इत्येककर्तृकारकत्वाद्दीपकालङ्कारः, इत्यनयोर्मिथो नैरपेक्ष्यात् संसृष्टिः। शार्दूलविक्रीड़ितं वृत्तम्॥

(६५) अघोरेति। ब्राह्मणडिम्भ; विप्रार्भक! (पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुरित्यमरः) तथाच विप्रत्वादर्भकत्वाच्च शूरत्वादिरहितेत्यर्थः।

(६६) व्याघ्रेति। हे पाप! देवतोद्देश्यकबलिदानपरिपन्थित्वात् पापकारिन्! व्याघ्रेण आघ्राता आक्रान्ता या मृगी हरिणी तस्यां कृपाकुलस्य तत्परित्राणार्थं दयापरवशस्य

---

(৬৪) রাহুগ্রহের মুখগত চন্দ্রকলার ন্যায় বিপন্না প্রেয়সী (মালতীকে) দৈবাৎ প্রাপ্ত হইয়া এই সম্মুখস্থিত দস্যুর খড়্গাপাতের গোচর হইতে সবলে আনয়ন করায় সম্প্রতি আমার চিত্ত আতঙ্কে বিহ্বল, দয়ায় দ্রবীভূত, বিস্ময়ে উদ্বেলিত, ক্রোধে উত্তেজিত ও আনন্দে উৎফুল্ল হইয়া যে কিরূপ ভাবাপন্ন (তাহা আমি ব্যক্ত করিতে পারিতেছি না)।

(৬৫) (৬৬) রে রে, বিপ্রবালক! পাপকারিন্! ব্যাঘ্রাক্রান্তা হরিণীতে

अपिच। रे रे पाप!

> प्रणयिसखीसलीलपरिहासरसाधिगतै-
> र्ललितशिरीषपुष्पहननैरपि ताम्यति यत्।
> वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः,
> पततु शिरस्यकाण्डयमदण्ड इवैष भुजः॥ (६८)

---

नियादीनां कर्मत्वेनान्वयः "पुरुषयोगिता" अलम्बोपारम्भमिति निरङ्कुशपञ्चबाणद्वारा इति संहतिः। तथाच मालत्या अलौकिकरूपलावण्यशीलशालित्वं व्यज्यते। उपमालङ्कारेण वस्तु अभिरिच्यतेव मनोहरोऽयं श्लोकः। शिखरिणीवृत्तम्॥

(६८) प्रणयीति। यत् मालत्या वपुः प्रणयिनीनां प्रणयास्पदीभूतानां सखीनां सलील लीलया सह वर्त्तमानः यः परिहासः, तत्र रसेन रागेण अधिगतैः लब्धैः ललितस्य अतिसुकुमारस्य मनोहरस्य शिरीषपुष्पस्य हननैः प्रहारैः अपि (किं पुनः खड्गैरित्यपेरर्थः) ताम्यति खेदमनुभवति। तत्र वपुषि वधाय शस्त्रं खड्गं उपक्षिपतः गृहीतवतः तव शिरसि अकाण्डे अकस्मादेव पतनशीलः यमदण्डः कालदण्ड इव एष दृश्यमानः मम भुजः बाहुः पततु। मम बाहुप्रहारेणैवाचिरात् तव शिरश्चूर्णीभविष्यतीति भावः। अत्रापि खड्गे "भुजः पततु" इत्यभिधानं वीरस्यापि विदीर्णस्य नाभवत् बाहुबलमात्रप्रयोजनार्थमित्यवधेयम्।

अत्र ताडनपुष्पहननैरपि ताम्यति, का कथा खड्गप्रहारे इत्यर्थापत्तिः। एवं ताडन-हननैः पीडाया असम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः, यमदण्ड इवेत्युपमा चालङ्कार इत्येषामङ्गाङ्गिभावेन सङ्करः। निरपराधानामतिशयोक्तिश्चात्र मालतीकलेवरस्यातीव सौकुमार्ये व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। नर्द्दटकं वृत्तम् "यदि भवतो नजौ भजजला गुरु नर्द्दटक"-मिति तल्लक्षणम्॥

---

সংসার সর্ব্বাংশে আলোকশূন্য, বান্ধবগণ মরদেহ, কন্দর্প নর্ম্মশূন্য, জন-গণের নির্ম্মাণ বিফল ও জীর্ণারণ্য প্রায় হইবে, অতএব তাহা সর্ব্বথা অকর্ত্তব্য)।

(৬৮) রে রে পাপকারিন্! যেই মালতীর শরীর প্রণয়িসখীজনের সলীল পরিহাসানুরাগবশে প্রাপ্ত সুকোমল শিরীষপুষ্পপ্রহার দ্বারাও বেদনা অনুভব করে, সেই শরীরে বধের জন্য খড়্গধারণকারী তোমার মস্তকে অকস্মাৎ পতনশীল যমদণ্ডের ন্যায় আমার এই বাহু নিপতিত হউক।

अघोर। आः दुरात्मन्! प्रहर, नन्वयं न भवसि। (६९)

माल। पसीद णाह साहसिअ! दारुणो क्खु अअं हदासो, परित्ताहि मं पडिणिअत्तीअदु इमादो अणत्थसंसअआदो। (छ)

कपा। भगवन्! अप्रमत्तो भूत्वा, दुरात्मानं व्यापादय। (७०)

माधवाघोरघण्टौ मालतीकपालकुण्डले प्रति। (७१)

---

(छ) प्रसीद नाथ साहसिक, दारुणः खल्वयं हताशः, परित्रायस्व मां प्रतिनिवर्त्यताम् अस्मादनर्थसंशयात्।

---

(६९) अघोरेति। प्रहरेति वचनं पश्यामि ते कीदृक्सामर्थ्यमिति सावष्टम्भोपहासद्योतकम्। अयं बलिविघ्नकारित्वाद्दुरात्मा न भवसि किं अपितु भवस्येव भयसीत्यर्थः। तस्मात्त्वमेव मयाऽचिराद्धन्तव्य इति भावः।

(छ) मालेति। हताशः निर्दयः ( हताशो निर्दये चाशारहिते पिशुनेऽपि चेति मेदिनी ) अनर्थसंशयात् अनिष्टस्य संशयात्। अयमतीव दारुणोऽसिस्यमामान्यदपतावच्छनमपन्नं भवतो मत्यपि दयालेशोऽस्य न स्यात्, युद्धे च जयस्य नियमाभावात् स्वकीयानिष्टसंशयोऽप्यस्तीति मत्परित्राणाध्यवसायं विहाय पलायनेन त्वं स्वजीवनं रक्षस्व। तथाच त्वद्गतप्राणाया मम तज्जीवनपरित्राणेनैव परित्राणं भवेदिति सरलार्थभावार्थौ।

अत्र विद्रवो नाम मुखसन्ध्यङ्गं। तथाचोक्तं दर्पणे—

"शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः" इति॥

(७०) कपेति। अप्रमत्तः अनवधानतारहितः। अस्यापि बलवत्त्वादिति भावः।

(७१) अत्र यथासंख्यानान्वयात् माधवो मालतीं प्रति अघोरघण्टश्च कपालकुण्डलां प्रत्याहेत्यर्थो लभ्यते।

---

(৬৯) অঘোর। আঃ দুরাত্মন্! প্রহার কর ( দেখি তোমার কতদূর বীরত্ব ) বলিবিঘ্নকারিত্বহেতুঃ তুমি দুরাত্মা নহ কি?

(ছ) মাল। নাথ! প্রসন্ন হও, এই ব্যক্তি অতিদারুণ ও নির্দ্দয়। তুমি আমাকে পরিত্রাণ কর। এই অরিষ্টসংশয় হইতে প্রতিনিবৃত্ত হও।

(৭০) কপা। ভগবন্! সাবধান হইয়া দুরাত্মার বিনাশ কর।

(৭১) ( মাধব মালতীর প্রতি ও অঘোরঘণ্ট কপালকুণ্ডলার প্রতি )

"पर्य्यवष्टभ्यतामेतत्करालायतनं द्रुतम् ।
नाघोरघण्टादन्यस्य कर्मैतद्भीषणाद्भुतम् ।
न करालोपहाराच्च फलमन्यद्विभाव्यते ॥" (७५)

कपा। भगवन्! पर्य्यवष्टव्धाः स्मः! (७६)

अघोर। सम्प्रति विशेषतः पौरुषस्यावसरः। (७७)

---

प्राप्स्यसी"त्येवं सान्त्वयन्ती। अप्रतिहता अप्रतिरुद्धा प्रज्ञाया विज्ञानस्य गतिर्यस्याः तथाभूता। क्वचि"दप्रतिहतप्रज्ञाचक्षु"रिति पाठभेदः ॥

(७५) आदेशप्रकारं दर्शयति—पर्य्येति। एतत्करालायतनं द्रुतं क्षिप्रं पर्य्यवष्टभ्यतां परिवेष्ट्यताम्। कुत इत्यत आह—नेति। भीषणं प्राणनाशाशङ्कया पित्रादीनां भीतिजनकं अद्भुतं, समुचितरक्षिपरिरक्षितभवनादपहरणादाश्चर्य्यकरं एतत् मालत्यपहरणरूपं कर्म्म अघोरघण्टादन्यस्य अघोरघण्टातिरिक्तजनस्य न सम्भवतीति शेषः। करालोपहारात् बलित्वेन करालायै प्रदानाच्च अन्यत् अतिरिक्तं फलं एतदपहरणस्य प्रयोजनं न विभाव्यते न सम्भाव्यते। तथाचाघोरघण्टेनैव करालायै बलित्वेन दातुं मालत्यपहृतेति तस्मिन् करालायतने गत्वा अन्वेष्टव्यमेतत् परिवेष्टनीयमिति भावः।

"इष्टस्यार्थस्य रचना लिपिः स्या"दिति दर्पणोक्तेरत्र "लिपि"नाम गर्भसन्धेरङ्गम् ॥

(७६) पर्य्यवष्टव्धाः सैनिकैः परिवृताः। भीत्यात् पलायनकाङ्क्षयेत्याशङ्कितत्वात् सम्भीतोक्तिरियं। "नृपादिजनिता भीतिरुद्वेगः परिकीर्त्तित" इति दर्पणोक्तेरत्र "उद्वेगो" नाम गर्भसन्ध्यङ्गम् ॥

(७७) विशेषतः आधिक्येन, पौरुषस्य बलप्रकाशात्मकपुरुषकारस्य, अवसरः अवकाशः। कैतवैः परिवेष्टितोऽपि पराक्रमं आपादयितुं शक्नोमि, तदेव मे पराक्रमो विशेषतः

---

যাহার বিজ্ঞানের গতি অপ্রতিহত সেই ভগবতী কামন্দকী এইরূপ সান্ত্বনা করিতে করিতে তোমাদিগকে আদেশ করিতেছেন—

(৭৫) "এই করালার গৃহ অতিশীঘ্র পরিবেষ্টন কর, এই ভীষণ ও আশ্চর্যজনক কর্ম অঘোরঘণ্ট ভিন্ন আর কাহারও নহে। করালা উদ্দেশে বলিদান ভিন্ন এই অপহরণের অন্য কোনও প্রয়োজন নাই।

(৭৬) কপা। ভগবন্! আমরা পরিবেষ্টিত হইলাম।

माल । हा ताद ! हा भअवदि ! (छ)

माध ! भवतु, बान्धवसमाजसुस्थितां मालतीं विधाय, तत्-समक्षमेनं दुरात्मानं व्यापादयामि । (७८)

[ मालतीमन्यतः कापालिकमन्यतः प्रेरयन् परिक्रामति । ] (७९)

माधवाघोरघण्टौ । [ अन्योऽन्यमुद्दिश्य ] आः पाप ! (८०)

कठोरास्थिग्रन्थिव्यतिकररणत्कारमुखरः,
खरस्नायुच्छेदक्षणविहितवेगव्यपगमः ।

---

(छ) हा तात ! हा भगवति !

---

मालतीप्रणयिनी भवेत्, तदर्थं तव भविष्यतीत्यवश्यं विधेयः पुरस्कारः कर्तव्य इति न मेतव्यं तदेनामाशीर्भिर्लिखितं ।

(छ) "भगवति" इति कामन्दक्याः सम्बोधनं । कं यदि तन्नोचितो मां परित्यक्त-विपत्तिकं महाभागं माधवञ्च रक्षस्वेति वाक्यशेषः ।

(७८) माधेति । मालतीं बान्धवसमाजे स्वाधिकमागतपितादिस्वजनसमूहमध्ये सुस्थितां भयोपद्रवेण सुखावस्थितां विधाय सम्पाद्य तत्समक्षं तस्य बान्धवसमाजस्य समक्षं यथा स्यात्तथा दुरात्मानं एनं कापालिकं व्यापादयामि विनाशयामि । तदाच मयानुष्ठितमानं कन्यारक्षणरूपं महोपकारं प्रत्यक्षीकुर्वन्नमात्योऽस्मभ्यमेव निष्प्रत्यूहमासादितं मह्यं मालती-मर्पयिष्यतीत्याशयः ।

(७९) अन्यतः तदाश्रयबान्धवसमुदायं प्रति । अन्यतः तद्विपरीतदेशं प्रति ।

(८०) अन्योऽन्यमिति माधवः अघोरघण्टमुद्दिश्य अघोरघण्टश्च माधवमुद्दिश्य युगपदेव आः पापेत्यादिवाक्यमाहतुः ।

---

(৭৭) আহার। সম্প্রতি বিচ্ছেদ দুঃসহতরের সময়।

(ছ) মাল। হা তাত! হা ভগবতি!

(৭৮) মাধ। হউক, মালতীকে বান্ধবসমাজমধ্যে সুস্থিত করিয়া এবং বান্ধবসমাজসমক্ষে এই দুরাত্মার নাশ করিব।

(৭৯) (মালতীকে তাহার বান্ধবগণের নিকটে ও কাপালিককে তদ্বিপরীত প্রদেশে প্রেরিত করিতে করিতে পরিক্রমণ)।

(৮০) (মাধব অঘোরঘণ্টের প্রতি ও অঘোরঘণ্ট মাধবের প্রতি)।

## षष्ठोऽङ्कः ।

ततः प्रविशति कपालकुण्डला । (१)

कपा । आः दुरात्मन्! मालतीनिमित्तं व्यापादितास्मद्गुरो
माधवहतक! अहं त्वया तस्मिन्नवसरे निर्दयं निघ्नती अपि स्त्री
अवज्ञाता । [ सक्रोधम् । ] तदवश्यमनुभविष्यसि कपालकुण्डला-
कोपस्य विजृम्भितम् । (२)

शान्तिः कुतस्तस्य भुजङ्गशत्रोर्यस्मिन्नमुक्तानुशया सदैव ।
जागर्त्ति दंशाय निशातदंष्ट्राकोटिर्विषोद्गारगुरुर्भुजङ्गी ॥ (३)

(१) तत इति, सर्व्वेषां प्रस्थानात् किञ्चित् परत इत्यर्थः ।

(२) कपेति । मालतीनिमित्तमिति व्यापादितक्रियाविशेषणम्, अतएव तस्य कर्म-
कारकत्वेन तत्सम्बन्धेऽपि व्यापादितः अस्मद्गुरुर्येन तादृशेति समासो न विरुध्यते । इति
मन्तव्यम् । हत एव हतकः ( कुत्सायां कप्रत्ययः ) नीचलोकः, स चासौ माधवश्चेति माधवहतकः
तत्सम्बोधनम् ( राजदन्तादित्वात् परनिपातः । तस्मिन्नवसरे अघोरघण्टव्यापादनका-
निर्द्दयं दयारहितं यथा स्यात्तथा निघ्नत्यपि त्वां प्रहरन्त्यपि अहं त्वया स्त्री इति हेतोः अवज्ञा
अवधीरिता, स्त्रीत्वेनावज्ञया विनिपात्यैव परित्यक्तेत्यर्थः ।
"अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु" इति दर्पणग्रन्थादव "क्षोभो"नाम
नाट्यालङ्कारः ॥

(३) शान्तिरिति । यस्मिन् भुजङ्गशत्रौ अमुक्तानुशया अतः सर्पस्य विनाशात् अपरित्यक्त-
दीर्घद्वेषा ( निबद्धानुशयेति पाठे तु बद्धदीर्घद्वेषेत्यर्थः ) ( अनुशयः पश्चात्तापे दीर्घद्वेषानुबन्धयो-

(১) ( তৎপরে কপালকুণ্ডলার প্রবেশ )।

(২) কপা। হে দুরাত্মন্ নীচলোক মাধব! তুমি মালতীর জন্য
নার গুরুকে ( অঘোরঘণ্টকে ) নিহত করিয়াছ, এবং সেই নিধনকালে
মি তোমাকে নির্দ্দয়ভাবে প্রহার করিলেও তুমি আমাকে স্ত্রীলোক বলিয়া
জ্ঞা করিয়াছ, ( ক্রোধের সহিত ) অতএব অবশ্যই তুমি কপালকুণ্ডলার
পের ফল অনুভব করিবে।

[ नेपथ्ये । ] भो राजानश्चरमवयसामाज्ञया सञ्चरध्वम्,
कर्त्तव्येषु, श्रवणसुभगं भूमिदेवाः पठन्तु ।
चित्रं नानावचननिवहैश्चेष्टतां मङ्गलेभ्यः,
प्रत्यासन्नस्त्वरयतितरां जन्ययात्राप्रवेशः ॥ (४)

---

रिति हेमः ) निशातदंष्ट्राकोटिः समतितीव्रदशनाग्रभागा विषोद्गारगुरुः गरलोद्वमनकठोरा भुजङ्गी फणिनी दंशाय दंशनार्थं सदैव जागर्त्ति सप्रयत्ना वर्त्तते । तस्य भुजङ्गशत्रोः सर्पनिहन्तुः शान्तिः सुस्थता कुतः कथं ? कथमपि नेत्यर्थः । यथाशीविषविनाशिनो जनस्य तद्विनाशश्रवणद्वेषतत्पत्नीदंशनाशङ्कया शान्तिर्न स्यात्, तथैवास्मद्गुरुवधकारिणस्तवापि मत्कर्त्तृकापकाराशङ्कया कदापि शान्तिर्न स्यादिति भावः ।

अत्र विधेयप्रतिपादकस्य तच्छब्दघटितवाक्यस्य पूर्व्वंविन्यासादनुवाद्यत्वप्रतीतिकारित्वेन वाक्यगत"विधेयाविमर्श"दोषः । एवं समादप्रस्तुतात् समस्य प्रस्तुतस्य बोधादप्रस्तुतप्रशंसालङ्कारः । इन्द्रवज्रावृत्तम् ॥

(४) भोः इति । भो राजानः ! हे पद्मावतीश्वरनिदेशवर्त्तिनः सामन्तभूभृतः ! यूयं चरमवयसां पूर्व्वापरकर्त्तव्याभिज्ञवृद्धानां आज्ञया अनुमत्या कर्त्तव्येषु उद्वाहोपयोगिकृत्येषु सञ्चरध्वं ( समस्तृतीयायुक्त इत्यात्मनेपदम् ) प्रवर्त्तध्वं यथाक्रमं तत्तदनुष्ठानेषु यतध्वमिति यावत् । तथा हे भूमिदेवाः । ब्राह्मणाः ! भवन्तः श्रवणसुभगं श्रुतिसुखकरं यथा स्यात्तथा पठन्तु यावाशुभजनकस्तोत्रं उच्चारयन्तु । तथा नानावचननिवहैः बहुप्रकारवाक्यसमूहैः मङ्गलेभ्यः वरकन्ययोः कुशलार्थं ( तादर्थ्ये चतुर्थी ) चित्रं जनानामाश्चर्य्यं जनयितुमिति शेषः । चेष्टतां यत्नः क्रियताम् वन्द्यादिभिरिति शेषः । कुत इत्यत आह—प्रत्यासन्न इति । प्रत्यासन्नः अतिसन्निहितः जन्यानां वरस्निग्धजनानां ( जन्याः स्निग्धाः वरस्य ये इत्यमरः ) यात्रायाः वरगृहात् कन्यागृहप्रयाणात्मिकायाः प्रवेशः प्राप्तिः त्वरयतितरां सर्व्वानतित्वरायुक्तान् करोति । तथाच मालतीमहाराजनन्दनयोर्व्विवाहार्थमचिरादेव वरयात्रिका अमात्यगृहं गति शोभायात्रां करिष्यन्तीति सत्यमेव तत्पूर्व्वानुष्ठेयानि सर्व्वाणि सम्पाद्यानीति भावः ।

---

(৩) যাহার দশনাগ্রভাগ অতিতীক্ষ্ণ গরলোদ্বমনভীষণ, তাদৃশী সর্পপত্নী পতিনিধনজনিত বৈরবৈর পরিত্যাগ না করিয়া যাহার দংশনের জন্য সর্ব্বদা চেষ্টিত থাকে, তাদৃশ ভুজঙ্গশত্রুর শান্তি কোথায় ?

(৪) (নেপথ্যে) হে সামন্ত রাজগণ। তোমরা পূর্ব্বাপর কর্ত্তব্যাভিজ্ঞ বৃদ্ধদিগের আদেশ অনুসারে উদ্বাহোপযোগি কার্য্যে প্রবৃত্ত হও। হে

[ ततः प्रविशति कलहंसकः । ]

कल। आणत्तोह्मि, णअरदेवदागब्भघरस्थिदेण समअरन्देण, णाहमाहवेण, जहा जाणाहि दाव जत्ताहिमुहं पउत्ता मालदी ण वेति, ता जाव णं आणन्दइस्सं (क)।

[ ततः प्रविशतो माधवमकरन्दौ।

(क) आज्ञप्तोऽस्मि, नगरदेवतागर्भगृहस्थितेन समकरन्देन नाथमाधवेन, यथा जानीहि तावत्, यात्राभिमुखं प्रवृत्ता मालती न वेति, तद्यावदेनम् आनन्दयिष्यामि।

सत्वरेण व्यग्रेण प्रतीहारशतेन बहुतरद्वारपालेन सङ्कुलात् परिव्याप्तात् प्रदेशात् भूरिवसुद्वार-देशादित्यर्थः, अपक्रम्य अन्यतो गत्वा माधवस्यापकारो मालत्यपहरणादिरूपस्तं प्रति अभिनिविष्टा दृढ़तरचेष्टा। अस्य प्रतीहारशतसङ्कुलप्रदेशस्य ताद्दृशापकारसाधनप्रतिकूलत्वादन्यतो गत्वैव तदभिनिवेशः करणीय इति भावः। विष्कम्भक इति, मध्यमपात्रभूतकपालकुण्डलामात्र-प्रयुज्यत्वात् शुद्धविष्कम्भकोऽयं। विष्कम्भकत्वञ्चास्य "व्यापादितासद्गुरौ" इत्यनेनाघोरघण्ट-वधादिरूपस्यातीतकथांशस्य "वत्सया मालत्या" इत्यादिना मालत्या नगरदेवतागृहं प्रति गमनस्य माधवापकारं प्रत्यभिनिविष्टा भवामीत्यनेन मालत्यपहरणरूपस्य च भाविकथांशस्य निदर्शनादिति विभावनीयम्।

(क) माधवमकरन्दयोः प्रवेशकमाह—आज्ञप्त इति। इतो मुखं एतन्नगरदेवतायतन-गृहाभिमुखं प्रवृत्ता आरब्धगमना। एनं माधवं, आनन्दयिष्यामीति "मालती इतोमुखमागन्तु मारब्धे"ति वार्त्तया विज्ञापनेनेति शेषः।

(৬) কপা। হউক, মালতীর বিবাহোপযোগি নানাবিধ ক্রিয়াসাধন-ব্যগ্র বহু দ্বারপালপরিব্যাপ্ত এই প্রদেশ হইতে অন্যত্র যাইয়া মাধবের অপকারসাধনে যত্নবতী হই। (কপালকুণ্ডলা প্রস্থান) (অতঃপর কল-হংসকের প্রবেশ)।

(ক) কল। মকরন্দের সহিত নগরদেবতার অন্তঃপুরগৃহস্থিত প্রভু মাধব কর্তৃক আমি অনুজ্ঞাত হইয়াছি—"তুমি জান, এই দেবগৃহাভিমুখে মালতী আসিতেছে কি না? অতএব "মালতী এই অভিমুখে আসিতেছে" ইহা নিবেদন করিয়া তাহাকে আনন্দিত করিতে যাই।

(তাহার পর মাধব ও মকরন্দের প্রবেশ)

अयं निपादिता गजवधूः ? (१६)

माध । [ सानन्दम् । ] कथमवतीर्थ्य भगवतीलवङ्गिकाभ्यां समम् इतः प्रवृत्तेव । (१७)

ततः प्रविशति कामन्दकी मालती लवङ्गिका च ।

काम । [ सहर्षमपवार्य्य । ]

विधाता भद्रं नो वितरतु मनोज्ञाय विधये,
विधेयासुर्द्देवाः परमरमणीयां परिणतिम् ।

---

पीड़ा यस्यास्तथाभूता प्रथमचन्द्रलेखायाः प्रतिच्छन्दः कलाया विमलं विमानं वहन्ती धारयन्ती मालती किञ्चिदन्तरं परिजनगणात् किञ्चिद्व्यवधानं यथा स्यात्तथा इत एव अस्मामिर्दृष्टि प्रवृत्ता आयाता ।

अत्र लुप्तोपमालङ्कारः, एवं "वहति" "व्यनक्ति" इत्यनेकक्रिययोः कारकोपकल्पैककर्तृ-कारकत्वाद्दीपकश्चालङ्कारः इत्यनयोरङ्गाङ्गिभावेन सङ्करः । न चात्र क्रियासमुच्चयः शङ्कनीयः प्रतियोगिकाभावेन समुच्चयस्य च तन्मूलकत्वेनात्र तदसम्भवादित्यनुसन्धेयम् । हरिणीवृत्तम् ॥

(१६) निपादिता उपवेशिता ।

(१७) माधेति । भगवती कामन्दकी । प्रवृत्तेव आयातुमारब्धेव मालतीति शेषः ।

(१८) स्वकीयप्रयत्नस्य सिद्धाम्नत्वात् सहर्षां कामन्दकी विघ्नविघाताय प्रार्थयते— विधातेति । विधाता विधिः मनोज्ञाय परस्पराभिलषणीयत्वान्मनोहराय विधये मालतीमाधवयो-रुद्वाहविधानाय नः अस्माकं भद्रं विघ्नापसारणरूपं मङ्गलं वितरतु अर्पयतु । देवाः परिणतिं अस्य विवाहस्य परिणामं परमरमणीयां परस्परातिप्रीतिसम्पादनादिना सर्व्वमनोहरां विधेयासुः क्रियासुः । ततः किमित्याकाङ्क्षायामाह—क्रतेति । प्रियसुहृदपत्ययोः परमप्रीति-

---

ও বর্দ্ধমান বিবাহ মহোৎসব শ্রীধারণ করিতেছে এবং শরীরের পাণ্ডুবর্ণতাও কৃশতা দ্বারা কামপীড়া ব্যক্ত করিতেছে।

(১৬) হস্তিনীকে বসাইল কেন ?

(১৭) মাধ। (আনন্দের সহিত) কেন অবতীর্ণ হইয়া ভগবতী কামন্দকীও লবঙ্গিকার সহিত (মালতী) এদিকেই আসিতেছে ?

(তৎপর কামন্দকী মালতীও লবঙ্গিকার প্রবেশ)

(১৮) কাম। (হর্ষের সহিত অন্যের অশ্রুতভাবে) পরস্পরের অভিলষিতত্ব নিবন্ধন অতিমনোরম মালতী ও মাধবের বিবাহবিধানে বিধাতা আমাদিগের

काम। अहमपि तावद्विविक्ते अलङ्करणरत्नानां प्राशस्त्यं शास्त्रत: परीक्षिष्ये। [ इति निष्क्रान्ता। ] (२२)

माल। [स्वगतम्]। कधं, लवङ्गिआमित्तपरिवारह्मि संवुत्ता। (ट)

लव। इदं देवदामन्दिरदुवारं ता पविसह्म। [ इति प्रविशत: ]। (ठ)

मक। वयस्य! इत: स्तम्भापवारितशरीरौ तिष्ठाव:। तथा कुरुत:। (२३)

लव। सहि! अअं अङ्गराओ, इमाओ कुसुममालाओ। (ड)

---

(ट) लवङ्गिकामात्रपरिवारास्मि संवृत्ता।

(ठ) एतद्देवतामन्दिरद्वारं, तत् प्रविशाव:।

(ड) सखि! अयमङ्गराग:, इमा: कुसुममाला:।

---

(ञ) क्व कुत्र, गमिष्यतीति शेष:।

(२२) विविक्ते—जनशून्यस्थाने। लवङ्गिकया सह विस्रम्भालापस्य नि:सङ्कोचं देवतायतने माधवकण्ठे माल्यार्पणस्य इ.दालिङ्गनस्यासुयोगं मालत्यै दातुं कामन्दक्या निष्क्रमणमिति मन्तव्यम्।

(ट) लवङ्गिकामात्र: परिवार: परिजन: यस्या तथाभूतास्मि। तथाच कथञ्चिदेनां वशीकृत्य प्राणांस्त्यक्ष्यामीति भाव:।

(२३) तिष्ठाव इति तथाच मालतीलवङ्गिकयोर्विस्रम्भालापं श्रोतुं शक्नुव इति भाव:।

(ड) अङ्गराग:—चन्दनकुङ्कुमाद्यङ्गानुलेपनद्रव्यम्।

---

(ঞ) লব। আপনি কোথায় যাইবেন ?

(২২) কাম। আমিও নির্জ্জন স্থানে শাস্ত্রানুসারে অলঙ্কাররত্নের প্রশস্ততা পরীক্ষা করিব। (কামন্দকীর প্রস্থান)

(ট) মাল। এই যে একমাত্র লবঙ্গিকাই আমার পরিজন থাকিল ?

(ঠ) লব। এই দেবতামন্দিরের দ্বার, অতএব (এস) আমরা প্রবেশ করি। (উভয়ের মন্দিরে প্রবেশ)

(২৩) মাধ। বয়স্য! আমাদের শরীর এই স্তম্ভে অন্তরিত করিয়া থাকি। (মাধব ও মকরন্দ স্তম্ভের অন্তরালে থাকিল)

(ড) লব। এই চন্দনকুঙ্কুমাদি অনুলেপন দ্রব্য, এবং এই কুসুমমালা।

आनन्दनानि हृदयैकरसायनानि,
दिष्ट्या मयाप्यधिगतानि वचोऽमृतानि ॥ (२६)

माल। जहा तस्स जीविदप्पदाइणो जणस्स, अवसिदेत्ति मं सुणिअ सन्तप्पमाणस्स, तं तहाविहं सरीररअणं ण परिहीअदि, जधा अ परलोअगदं पि मं उद्दिसिअ सो जणो संस्सरणकधामेत्तपरिसेसं कालन्तरेवि लोअजत्तं न सिढिलेदि तहा करेसि। एवं ज्जेव पिअसहीए प्पसादादो मालदी किदत्था भोदि। (न)

---

(न) यथा यस्य जीवितप्रदायिनो जनस्य अवसितेति मां श्रुत्वा सन्तप्यमानस्य, तत्तथाविधं शरीररत्नं न परिहीयते, यथा च मां परलोकगतामप्युद्दिश्य स जनः संस्मरणकथामात्रपरिशेषां कालान्तरेऽपि लोकयात्रां न शिथिलयति, तथा करिष्यसि, एवमेव प्रियसखीप्रसादात् मालती कृतार्था भवति।

---

मोहनानि आनन्दजडिमाहृतिनिरोधकानि, आनन्दनानि नयनानन्दसम्पादकानि, तथा हृदयस्य कामज्वराभिभूतस्येत्यर्थः एकरसायनानि अद्वितीयभेषजानि ('यज्जराव्याधिविध्वंसि भेषजं, तद्रसायनमिति चरकः') वचांसि मालत्याभिहितान्येतानि वाक्यान्येव अमृतानि पीयूषाणि दिष्ट्या भाग्येनैव मयापि अधिगतानि प्राप्तानि। एतादृशवचोऽमृतलाभानुगुणगुणादिरहितोऽपि परमसौभाग्यवशादेवैतानि वाक्यानि लब्ध्वा कृतार्थोऽहमिति भावः।

अत्र प्रसजन्नपि अर्थगतपुनरुक्ततादोषः परमसन्तप्तमनसा माधवेनाभिहितत्वात् पूर्व्ववद्गुणत्वमेव भजते। निरङ्गरूपकालङ्कारः। वसन्ततिलकं वृत्तम्। अयमेव श्लोकः किञ्चिद्विकलीकृतः उत्तररामचरितप्रथमाङ्के कविना निबद्ध इत्यनुसन्धेयम्।

(न) मावेति। यथा तद्विरहेणाहं मर्त्तुमुद्युक्तास्मि, तथा मद्विरहेण सोऽपि यदि शरीरं जह्यादित्याशङ्कायामाह—यथेति। जीवितदायिनः करालायतने प्राणरक्षिणः, अवसितेति

---

(২৬) মাধ। বয়স্য মকরন্দ! মালতীপ্রাপ্তি নৈরাশ্যে পরিম্লান-জীবন-রূপ কুসুমের বিকাশক, পরম তৃপ্তিজনক, আনন্দজড়তাবশতঃ সমস্ত ইন্দ্রিয়-বৃত্তির নিরোধক, পরম আনন্দজনক, ও কামজ্বরসন্তপ্ত হৃদয়ের অদ্বিতীয় ঔষধ এই বাক্যামৃত সৌভাগ্যক্রমেই আমি লাভ করিলাম।

(ন) মাল। আমার জীবনদাতা সেই মাধব আমি মরিয়াছি শুনিয়া যাহাতে সেই অসামান্য রূপলাবণ্যসম্পন্ন তাহার সেই শরীররত্ন পরিত্যাগ না

लव। भद्द! पडिहदं दाणिं दे अमङ्गलं ण अदोवि अहि-भदरं सुणिस्सम्। (प)

माल। सहि! पिअं क्खु तुम्हाणं मालदीजीविदं ण उण मालदी। (फ)

लव। किं एव्वं भणिदे भोदि। (ब)

माल। [आत्मानं निर्दिश्य।] जेण अस्सजणपच्चाणाविग्न-वीहिं वग्गणसंविहाणेहिं जीआविश्र इमं ज्जेव्व महाबीभच्छारम्भ

(प) अपि प्रतिहतम् इदानीं तेऽमङ्गलम्। नातोऽप्यधिकतरं श्रोष्यामि।

(फ) सखि! प्रियं खलु युष्माकं मालतीजीवितं न पुनर्मालती।

(ब) किमेवं भणिते भवति।

(भ) येन अस्वजनप्रत्यायानिमन्वनैर्वचनसंविधानैर्जीवयित्वा इममेव महाबीभत्सारम्भमनु-

अत्र विवाहार्थमौत्पूर्विकवहृभावोधारयार्थे प्रयोगादवाचकत्वदोषः। अवादन्तुवयो-र्मिपन्नहोतृवयो"ह्वहानीत्विक्रियया कर्मत्वेनान्वयानुल्यवोगिता एवं विरुद्धयोर्मिपन्न-होतृवयोरेकदा सङ्घटनात् उपनावङ्गारयेऽनयोः सङ्करः। वसन्ततिलकावृत्तम्।

(प) अमङ्गलं मरणाध्यवसायरूपमत्याहितं प्रतिहतं सन्निहितदेवतया विनाशितं भवेदिति शेषः।

(ब) एवं भणिते—"मालतीजीवितमेव युष्माकं प्रियं न पुनर्मालती"त्युक्ते किं भवति? अनेन वाक्येन किं प्रतिपादितं भवतीति प्रश्नार्थः। मालती मालतीजीवितशब्दयोरुभयोरे देहदेहावच्छिन्नात्मपरतया मालतीजीवितस्य प्रियत्वे मालत्या अप्रियत्वं व्याहतमिति तदीय-वाक्यस्य तात्पर्यं नावगच्छामीति भावः।

শুনিয়া আমি ইহার দুঃখাপনয়নোপায়চিন্তাজনিত বিবাদরূপ বিপত্তি ও পরম আনন্দ ধারণ করিতেছি।

(প) লব। অয়ি সখি! সন্নিহিত দেবতা কর্তৃকই তোমার মরণাধ্যবসায় রূপ অমঙ্গল বিনাশিত হইবে। ইহার অধিক আর শুনিব না।

(ফ) মাল। সখি! মালতীর জীবনই তোমাদের প্রিয়, কিন্তু মালতী তোমাদের প্রিয় নহে।

। এই কথার কি তাৎপর্য্য হইল? ( বুঝিলাম না )।

माल। [ सहर्षम् । ] कधं अणुग्गहीदह्मि । [ उत्थाय । ] इम-मालिङ्गामि। दंसणं उण पिअसहीए वाप्फोपीड़ेण णिरुद्धं पच्छिमं ण लब्भोअदि ! ※ [ आलिङ्ग्य सानन्दम् । ] सहि ! कठोरकमल-गब्भपह्मलो अणारिसो ज्जेव्व दे अज्ज णिव्वावेदि मं सन्तप्पमाणं

(५) कथमनुगृहीतास्मि। इयमालिङ्गामि। दर्शनं पुनः प्रियसख्या वाष्पोत्पीड़ेन निरुद्धं पश्चिमं न लभ्यते। सखि ! कठोरकमलगर्भपक्ष्मलः अन्यादृश एव ते अद्य निर्वापयति मां सन्तप्यमानां प्रियसख्याः शरीरस्पर्शः। किञ्च मौलिविनिवेशिताञ्जलिर्मम वचनेन विज्ञा-

पूर्व्ववदेव तत्सखैरेव अन्तर्लवङ्गिकैवाह—किं वेति। माधवपक्षे हे विच्छेददारुणायास-कारिणि ! वर्त्तमानविरहेनातिभीषणक्लेशदायिनि ! किंवा भणामि.. मरणविषये किंवा ब्रवीमि, तस्यात्यन्तानभिलषणीयत्वात् मत्प्राप्त्या मरणस्य निष्प्रयोजनत्वाच्च तव न किमपि वक्तव्यमस्तीत्यर्थः। अतएव हे वरारोहे ! सुश्रोणि ! (आरोहः श्रोणिकारयोरिति धरणिः) कामं कुरु मया सह कामव्यापारं अनुतिष्ठ। "हे विच्छेददारुणायासकारिणि मरणाद्-भाविविरहेणातिभीषणकष्टदायिनि ! किं भणामि ? तव मरणविषये किं कथयामि ? उभयथाप्यसहनीयत्वान्न किमपि वक्तुं प्रभवामीत्यर्थः। अतएव वरारोहे ! कामं यथाभि-लषितं कुरु" इति लवङ्गिकोक्तिभ्रान्तिशालिन्या मालत्या बोधनीयः अर्थः। अतएव मे मम परिरम्भणं आलिङ्गनं देहि इत्युभयत्र समानम्।

अत्र "माधवं संज्ञया समाह्वयति" इत्यादितवतदन्ते सन्दर्भे छद्मना माधवाभिलापपूरणा-भिसन्धानादधिवनं नाम गर्भसन्धेरङ्गं, दर्पणोक्तं तल्लक्षणन्तु—"अधिवनमभिसन्धिस्थान" इति।

(२) "कामं कुरु" इत्यनेन अभिलषिते स्वमरणे लवङ्गिकायाः सम्मतिं मत्वा सानन्द-

(৩৬) মাধ। (হর্ষের সহিত) হে বিচ্ছেদ দ্বারা ভীষণ দুঃখ দানশীলে মালতি ! তোমার এই মৃত্যু বিষয়ে আমি কি বলিব ? (অত্যন্ত অসহনীয় ও নিষ্প্রয়োজনীয় বিধায় এ বিষয়ে আমি কিছুই বলিতে চাহিনা) হে সুশ্রোণি ! তুমি আমার সহিত কাম ব্যবহার কর, আমাকে আলিঙ্গন দেও। (লবঙ্গিকার উক্তিভ্রমে মালতীবোধ্য অর্থ—"তোমার এই মৃত্যু বিষয়ে আমি আর কি বলিব, তোমার যাহা ইচ্ছা তাহাই তুমি কর। হে বরারোহে ! আমায় আলিঙ্গন দেও" )।

(২) মাল। (হর্ষের সহিত) তবে কি আমি মরণানুমোদন দ্বারা অনু-

दुव्वारुव्वे अव्वइकरुव्वत्तमाणबन्धणं धारिअं हिअअम्। गमिआ अ वारंवारं सविसेसदूसहारम्भदूमसाइअसहीअणा सरीरसन्दावा, कधंवि अदिवाहिदा चन्दादवमलअमारुदप्पमुहा अणत्थपरम्परा, सम्पदं उण णिरासाह्मि संवुत्तेसि, तुएवि पिअसहीए सव्वदा सुमरिदव्वह्मि। एसा अ सिरिमाहवसहत्थणिम्माणमणहरा बउलमाला मालदीजीविदणिव्विसेसं पिअसहीए दट्टव्वा सव्वधा हिअए धारणीएत्ति। (२)

---

सुधामनोरथैश्च अविरतविजृम्भमाणदुर्वारोद्वेगव्यतिकरोद्वर्त्तमानबन्धनं धारितं हृदयम्। गमिताश्च वारंवारं सविशेषदुःसहारम्भदुर्मनायितसखीजनाः शरीरसन्तापाः, कथमपि अतिवाहिताः चन्द्रातपमलयमारुतप्रमुखा अनर्थपरम्पराः, साम्प्रतं पुनर्निराशास्मि संवृत्ता इति। त्वयापि प्रियसख्या सर्वदा स्मर्त्तव्यास्मि। एषा च श्रीमाधवस्वहस्तनिर्माणमनोहरा वकुलमाला मालती-जीवितनिर्विशेषं प्रियसख्या द्रष्टव्या, सर्वथा हृदये धारणीया इति।

---

मम नयनानां ( बहुवचनं दर्शनस्यातिशय्यद्योतनार्थं, क्वचित् "लोचनयो"रित्येव पाठः ) महोत्सवः परमानन्दः न सम्भावितः न सम्पादितः। मुधा मनोरथैः "पत्या तेन सममे-वं सुखमनुभविष्यामो"ति वृथाभिनिवेशैः, अविरतं अविच्छेदं विजृम्भमाणस्य वर्द्धमानस्य दुर्वारोद्वेगस्य दुर्दमनीयकामोद्वेगस्य यो व्यतिकरः सम्पर्कः तेन उद्वर्त्तमानं उच्छिन्नप्रायं बन्धनं मूलबन्धो यस्य, तथाभूतं हृदयं धारितं एतावत्कालं परिरक्षितं। तथापि म-नोरथो यदि नाभ्यागमिष्यत् तादृशावस्थैव मम हृदयमुन्मथितमभविष्यदिति भावः। [illegible] दुर्मनायिताः [illegible] शरीरसन्तापाः [illegible] चन्द्रकिरणादीनां [illegible] अविच्छिन्नदुःखैकप्रसवाः, तत्सापि [illegible]

---

[illegible]

माल। [ स्वगतम्। ] अह्वो! लवङ्गिआए मालदी विप्पलद्धा। (ल)

माध। अयि! स्ववेदनामात्रनिवेदिनि! परव्यथानभिज्ञे! इयमुपालभ्यसे। (४०)

उद्दामदेहपरिदाहमहाज्वराणि,
सङ्कल्पसङ्गमविनोदितवेदनानि।
त्वत्स्नेहसंविदवलम्बितजीवितानि,
किं वा मयापि न दिनान्यतिवाहितानि? (४१)

---

(ल) अहो लवङ्गिकया मालती विप्रलब्धा।

---

यस्यास्तथाभूतया अनया मालत्या अवपीडा मां गाढ़मालिङ्ग्य मे मम त्वचि स्पर्शेन्द्रिये कर्पूरादीनि प्रसिद्धानि आदिशब्देन चन्द्रकिरणादेः परिग्रहः, तेषां वर्गः समूहः एकीकृतः मिश्रीकृतः सन् निषिक्तः क्षिप्त इव। अन्यथा एतादृशशीतलत्वासम्भवादिति भावः।

अत्र निषिक्त इवेति वाच्याक्रियोत्प्रेक्षालङ्कारः, तेन च मालत्याः स्पर्शसातीव शैत्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। वसन्ततिलकावृत्तम्।

(ल) विप्रलब्धा स्वावस्थानस्थाने अमुं संस्थाप्य प्रतारिता। यद्यपि लवङ्गिकया स्वाभिप्रेतमेव साधितं, तथाप्याकारगोपनेन प्रतारणमुक्तम्।

(४०) अयीति। माधवव्यथायाः प्रसङ्गतोपाकथनान्मात्रपदं। परव्यथेति परस्य माधवस्य मम चित्तपीड़ेत्यर्थः। इयं त्वं उपालभ्यसे उक्तसम्बोधनपदाभ्यां तिरस्क्रियसे।

(४१) स्ववेदनां प्रकटयितुमाह—उद्दामेति। उद्दामः उत्कटः देहस्य शरीरस्य परिदाहः सामस्त्यसन्ताप एव महाज्वरो येषु तथाभूतानि, सङ्कल्पसङ्गमेन मानसिकसङ्गमेन

---

হইয়াছে, এইরূপ মালতী আমায় গাঢ় আলিঙ্গন করিয়া আমার স্পর্শেন্দ্রিয়ে কর্পূর, মুক্তাহার, হরিচন্দন ও চন্দ্রকান্ত মণির নির্য্যাস, শৈবাল, মৃণাল এবং হিমানিচূর্ণ মিশ্রীকৃত করিয়া যেন আমার হৃদয়ে নিষিক্ত করিতেছে।

(ল) মাল। (স্বগত) অহো লবঙ্গিকা কর্ত্তৃক মালতী প্রতারিত হইয়াছে।

(৪০) মাধ। অয়ি! স্ববেদনামাত্রনিবেদনকারিণি! পরব্যথানভিজ্ঞে! তোমাকে উক্ত সম্বোধনে তিরস্কার করিতেছি।

त्वं वत्सलेति कथमप्यवलम्बितात्मा,
सत्यं जनोऽयमियतो दिवसाननैषीत्।
आवद्धकङ्कणकरप्रणयप्रसाद-
मासाद्य नन्दतु चिराय, फलन्तु कामाः॥ (४३)

लव। महाणुभाव! हिअए वि अपड़िहदसअंगाहसाहसो अअं जणो, किं दाणिं करग्गहणे विआरेदि। (५)

---

(५) महानुभाव! हृदयेऽपि अप्रतिहतस्वयंग्राहसाहसोऽयं जनः किमिदानीं करग्रहणे विचारयति?

---

(४२) महाभागे इति मालत्याः सम्बोधनं, एतन्माधवेन यदुक्तं तत् एवं यथार्थमित्यर्थः।

(४३) यथार्थत्वं समर्थयितुमाह—त्वमिति। त्वं वत्सला अस्मिन्ननुरक्ता इति हेतोरेव कथमपि अतिक्लेशेन अवलम्बितः तव विरहदुःखेऽपि विधृतः आत्मा जीवितं येन तथाभूतः, अयं जनः इयतो दिवसान् तव दर्शनत एतावद्दिनानि अनैषीत्, त्वत्प्राप्तिप्रत्याशयैव अतिक्रान्तवानीति सत्यं। तथाच तवानुरागादन्योऽन्यस्य जीवनधारणहेतुरित्यतः परमपि त्वयैवास्य जीवनरक्षायै सर्व्वथा यतितव्यमिति भावः। अत एव आवद्धकङ्कणस्य विधृतविवाहसूत्रस्य (कङ्कणं करभूषायां सूत्रमण्डनयोरपीति मेदिनी) करस्य तव पाणेः प्रणयः परिग्रहः स एव प्रसादः अनुग्रहस्तं आसाद्य प्राप्य नन्दतु माधवः परमानन्दं लभताम्, कामाः अस्माकं मनोरथाश्च चिराय फलन्तु सफलाः सन्तु।

अत्र चतुर्थचरणे प्रार्थनाद्वयसत्त्वेऽपि समुच्चयार्थकचकारादेरभावान्न्यूनपदत्वदोषः।
वसन्ततिलकावृत्तम्॥

(५) हृदयेति। हृदयेऽपि स्वान्तेऽपि (हृदयं वक्षसि स्वान्ते इति हेमः)

---

(৪২) সখি। মহাভাগে! মাধব যাহা বলিয়াছে, তাহা সত্য।

(৪৩) "তুমি ইহার প্রতি অনুরক্ত" এই কারণেই সে কোন প্রকারে জীবন ধারণ করিয়া (তোমাকে পাওয়ার আশায়) এতদিন অতিবাহিত করিয়াছে সত্য। অতএব বিবাহকালীন তোমার পাণিগ্রহণরূপ অনুগ্রহ লাভ করিয়া মাধব পরম আনন্দ উপভোগ করুক, আমাদের মনোরথ চিরকালের জন্য সফল হউক।

काम। (तस्याश्चिबुकम् उन्नमय्य) वत्से!

पुरश्चक्षूरागस्तदनु मनसोऽनन्यपरता,
तनुग्लानिर्यस्य त्वयि समभवद्यत्र च तव।
युवा सोऽयं, प्रेयानिह सुवदने! मुञ्च जड़ताम्
विधातुर्वैदग्ध्यं विलसतु, सकामोऽस्तु मदनः॥ (४६)

लव। भअवदि! कसणचउद्दसीरअणीमसाणसञ्चरणणिव्वत्तिदसमव्ववसाअणिट्ठाविअचण्डपासण्डपअण्डदोद्दण्डसाहसो साहसिओ क्खु एसो, अदो मे पिअसही उक्कम्पिदा। (ह)

---

(ह) भगवति! कृष्णचतुर्दशीरजनीश्मशानसञ्चरणनिर्वर्त्तितविषमव्यवसायनिष्ठापितचण्डपाषण्डप्रचण्डदोर्दण्डसाहसः साहसिकः खलु एषः, अतो मे प्रियसखी उत्कम्पिता।

---

(४६) पुर इति। यस्य माधवस्य त्वयि यत्र च माधवे तव पुरः प्रथमं चक्षूरागः नयनप्रीतिः, तदनु तदनन्तरं मनसश्चित्तस्य अनन्यपरता अनन्यनिष्ठता एकाग्रतेति यावत्, ततश्च तनुग्लानिः अलाभवशात् कामजशरीरसन्तापः समभवत्। अयं स प्रेयान् तव प्रियतमः युवा माधवः इह अत्र स्थाने उपस्थितः इति शेषः। अत एव हे सुवदने! जड़तां कार्य्याकार्य्यविमूढ़तां मुञ्च परिहर। जड़तां परित्यज्य निःशङ्कमेनं वृणीष्वेति भावः। तेन च विधातुः विश्वसृजः वैदग्ध्यं युवयोर्निर्म्मितपाण्डित्यं विलसतु परस्परं योग्यसम्मेलनेन विकाशताम्। मदनः कामश्च सकामः युवयोः परस्परसमागमेन पूर्णमनोरथः अस्तु भवतु।

अत्रापि चतुर्थचरणे समाकाङ्क्षितसमुच्चयार्थकचकारादेरभावान्न्यूनपदत्वदोषः।

"अन्योऽन्यमुभयोरेकक्रियायाः करणं मिथः" इति दर्पणलक्षणादत्र प्रथमार्द्धे अन्योऽन्यालङ्कारः, एवमप्रस्तुतानां चक्षूरागादीनां समभवदित्येकक्रियायाः कर्त्तृत्वे नान्वयात्तुल्ययोगिता, "मुञ्च

---

(৪৬) কাম। (মালতীর চিবুক উন্নমিত করিয়া) যেই মাধবের তোমাতে ও যেই মাধবে তোমার প্রথমে নেত্রপ্রীতি তৎপরে চিত্তের একাগ্রতা ও তৎপরে শরীরগ্লানি হইয়াছিল। সেই প্রিয়তম যুবা মাধব এস্থানে উপস্থিত। অতএব অয়ি সুবদনে! তুমি কর্ত্তব্যাকর্ত্তব্য চিন্তা পরিত্যাগ কর। অর্থাৎ নিঃশঙ্কচিত্তে ইহাকে বরণ কর। (পরন্তু তদ্দ্বারা) বিধাতার নির্ম্মাণপাণ্ডিত্য প্রকাশিত হউক ও কামদেব সফলকাম হউক।

काम। वत्स माधव! (४८)

माध। आज्ञापय। (४९)

काम। इयम् अशेषसामन्तमस्तकोत्तंसपरागरञ्जितचरणाङ्गुलेः अमात्यभूरिवसोः एकम् अपत्यरत्नं मालती, भगवता सदृशसंयोग रसिकेन वेधसा, मन्मथेन, मया च, तुभ्यं प्रदीयते। [इति रोदिति।](५०)

मक। फलितं हि नस्तर्हि भगवतीपादप्रसादेन। (५१)

---

(च) हा तात हा अम्बेति, युवयोः सम्मतिमप्यनपेक्षमाणैव: कुलकन्यकाजनविरुद्ध-माचरन्ती कथं पुनर्मुखं दर्शयेयमिति शेषः। तथाच विचारं तदानीमेव माधवपाणिग्रहणस्य कर्त्तव्यता स्थिरीकृतेति व्यज्यते।

(५०) कामेति। अशेषाणां निरवशेषाणां सामन्तानां अधिनीकृतभूपतीनां ये मस्त-कोत्तंसाः शिरोऽलङ्कारालङ्कृतापन्नपुष्पाणीति यावत्, तेषां परागैः रजोभिः रञ्जिताः चरणाङ्गुलयो यस्य तथाभूतस्य। (एतेनास्याः परमैश्वर्य्यशालिकन्यात्वं सूचितम्) अपत्यरत्नं अतुलनीयगुणलावण्यसम्पन्नत्वात् रत्नमिवापत्यम्। तथाच परमैश्वर्य्यशालिनोऽपत्यत्वात् पित्रो-र्वात्सल्यैकभाजनत्वात् सौन्दर्य्याद्यनेकगुणसम्पन्नत्वाच्च ममतोऽपि नास्यानादरस्त्वया करणीय इति भावः। सदृशसंयोगरसिकेन योग्यसम्मेलनाभिनिवेशशालिना वेधसा विधिना (तेनैव प्रथमं ललाटपटे लिखितत्वादिति भावः) मन्मथेन कामेन (तेनैव तदनन्तरमकस्मादुभयो-र्निरतिशयासक्तिजननादिति भावः) मया च (तदनुगुणलौकिकप्रयत्नकरणादिति भावः) तुभ्यं प्रदीयते। संप्रदानस्य विघ्नोपक्रमत्वादीनां परिचिन्तनमेव निरतिशयवात्सल्यशालिन्या मातृस्थानीयायाः कामन्दक्याः रोदनहेतुः।

---

(क) মাল। হা! তাত! হা! মাতঃ! (তোমাদের অমতে কুল-কন্যাজনবিরুদ্ধ এইরূপ আচরণ করিয়া কিরূপে মুখ দেখাইব)

(৪৮) কাম। বৎস মাধব!

(৪৯) মাধ। আজ্ঞা করুন।

(৫০) কাম। যাহার চরণাঙ্গুলি সমস্ত অধিকৃত নৃপতিগণের মস্তকালঙ্কার পুষ্পপরাগে রঞ্জিত হয়, তাদৃশ অমাত্য ভূরিবসুর একমাত্র কন্যা মালতীকে প্রথমে বিধাতা তৎপরে কামদেব ও তৎপরে এই আমি তোমায় অর্পণ করিতেছি। (কামন্দকী রোদন করিতে লাগিলেন)

माध । तत्किमिति वाष्पायितं भगवत्या ? । (५२)

काम । [ चीवराञ्चलेन नेत्रे परिमृज्य । ] विज्ञापयामि कल्याणिनम् । (५३

माध । ननु आज्ञापय । (५४)

काम । परिणतिरमणीयाः प्रीतयस्त्वद्विधानाम्
अहमपि तव मान्या हेतुभिस्तैश्च तैश्च ।
तदिह सुवदनायां तात ! मत्तः परस्तात्-
परिचयकरुणायां सर्व्वथा मा विरंसीः ॥ (५५)

---

(५१) तर्हि माधवाय मालत्या दाने निष्पन्ने, फलितं सञ्जातफलेन भूतम् ( भावे क्तप्रत्ययः ) ।

(५२) वाष्पायितमिति "वाष्पादिभ्य उद्वमने" इत्याद्यन्ताद्वाष्पशब्दाद्भावे क्तप्रत्ययेन निष्पन्नम् । तथाच वाष्पोद्वमनं कृतमित्यर्थः ।

(५३) कल्याणिनं कुशलान्वितं त्वां विज्ञापयामि वाष्पोद्गमननिमित्तमिति शेषः ।

(५५) परिणतीति । हे तात ! पुत्र ! ( पुत्रे पितरि पूज्ये च तातशब्दः प्रयुज्यते इति शब्दार्णवः ) ( पुत्रत्वेन सम्बोधनं वात्सल्यातिशयद्योतनार्थम् ) त्वद्विधानां त्वादृशानां नाना-सद्गुणसम्पन्नानां पुरुषाणां प्रीतयः यस्मिन् कस्मिन्नपि अनुरागाः परिणत्या परिपाकेण रमणीयाः मनोहराः क्रमशः एव दृढतामापन्ना इति यावत्, भवन्तीति शेषः । अहमपि तैश्च तैश्च तव पित्रा त्वयैव च सहाध्यायित्वादिभिः हेतुभिः निमित्तैः मान्या माननीया अनतिक्रमणीयवचनेति यावत् । तत्तस्मात् मत्तः परस्तात् परवर्त्तिनि समये मयि परोक्षतां गतायामित्यर्थः, इह अस्यां सुवदनायां मालत्यां परिचयः गाढ़प्रणय एव करुणा कृपा तस्याः सकाशात् मा विरंसीः

---

(৫১) বৎস ! তবে ভগবতীর পদপ্রসাদে আমাদের পক্ষ সফল হইল ।

(৫২) মাধ । তবে ভগবতী অশ্রুমোচন করিতেছেন কেন ?

(৫৩) কাম । ( চীবরাঞ্চলে নেত্র মার্জ্জন করিয়া ) কুশলাস্পদকে (তোমাকে) জানাইতেছি ।

(৫৪) মাধ । আজ্ঞা করুন ।

(৫৫) কাম । হে বৎস ! তোমার ন্যায় নানা সদ্গুণসম্পন্ন পুরুষের অনুরাগ পরিণতিতে রমণীয় ( অর্থাৎ ক্রমশঃ দৃঢ় ) হইয়া থাকে ।

माध। भगवति! शुभमपि वञ्चनयं अतिसङ्कटम् इदं वयस्यस्य। (७०)

काम। आः कस्त्वमस्यां चिन्तायाम्?। (७१)

माध। एवं भगवती एव जानाति (७२)

[प्रविश्य मकरन्दः। विहसन्।] वयस्य! मालती अस्मि। [सर्व्वे सकौतुकं पश्यन्ति।] (७३)

---

तिरस्करिणीं अन्तर्धाय भवतीनां मम च मध्ये विलम्बिनीं विधाय तद्व्यवहितो भूत्वेत्यर्थः। अन्यथा स्त्रीजनसन्निधौ पुरुषस्यानभ्यस्तस्त्रीजनोचितवस्त्रपरिधाने लज्जाविशेषसम्भवादिति भावः।

(७०) इदं मालतीवेशेन नन्दनप्रतारणपुरःसरमदयन्तिकोपयमनं शुभमपि वञ्चनयं अनेकविपत्तिशङ्काकुलं "सुलभवञ्चनयं"मिति पाठे तु सुप्राप्यबहुविपत्तिकमित्यर्थः। अतिसङ्कटं अतिदूरसाधनीयम्। तथा चैतदनुष्ठानं न सुष्ठुतया मह्यं रोचत इति भावः।

(७१) अस्यां इदं वञ्चनयं अतिशङ्कनमतः कर्त्तव्यं नवेत्यादिरूपायां चिन्तायां त्वं कः त्वं नैवाधिकारीत्यर्थः। युष्माकं मङ्गलामङ्गलयोश्चिन्तनभारस्य मयैव स्वशिरसि विधृतत्वा-द्विपत्पातसम्भावनातिरोधानोपायपरिकल्पनाच्चे ति भावः।

(७२) एवं तच्चिन्तायां ममाधिकारो नास्तीति सत्यं। भगवत्येव नत्वहमित्येवार्थः। जानातीति, एतादृशानुष्ठाने शुभमशुभं वा भवेदिति शेषः। तथाच भगवत्यै यद्रोचते तदेव भवत्विति भावः।

(७३) प्रविश्येति। "स्त्रीवेशधारिणां पुंसां नाट्यं श्लक्ष्णं विगूढक"मिति दर्पणलक्षणादेव विगूढकं नाम नाट्याङ्गं। तथा "कपटं मायया यत्र रूपमन्यद्विभाव्यते" इति तल्लक्षणात् कपटं नाम नाट्यालङ्कारश्च।

---

(৬৯) মক। ভগবতী যাহা আজ্ঞা করিলেন তাহাই হইবে। তবে মন্দির-পার্শ্ব হইতে বস্ত্রনির্ম্মিত তিরস্করিণী আনিয়া তাহা আপনাদের ও আমার মধ্যে বিলম্বিত করিয়া বস্ত্রাদি পরিধান করি। (তাহাই করিল)

(৭০) মাধ। ভগবতি! মালতীবেশে নন্দনকে বঞ্চিত করিয়া মদয়ন্তিকার পাণিগ্রহণ বয়স্যের পক্ষে শুভ হইলেও বহু বিপত্তিসঙ্কুল ও অতি দুঃসাধ্য।

(৭১) কাম। আঃ এ চিন্তা করিবার তুমি কে?

(৭২) মাধ। তাহা ঠিক। শুভ কি অশুভ হইবে তাহা ভগবতীই জানেন।

माध। [ मकरन्दं परिष्वज्य, सोपहासम् । ] भगवति ! कृतपुण्य एव नन्दनो, यः प्रियामीदृशीं मनसा मुहूर्त्तमपि कामयिष्यते। (७४)

काम। वत्सौ मालतीमाधवौ ! इतो निर्गत्य त्वरितगमनेन गम्यताम् उद्वाहमङ्गलार्थम् अस्मद्विहारिकायाः पश्चादुद्यानवाटः, सुविहितं च तत्रैव वैवाहिकं द्रव्यजातम् अवलोकितया। भूयश्च (७५)

गाढ़ोत्कण्ठकठोरकेरलवधूगण्डाच्छपाण्डुच्छदैः
ताम्बूलीपटलैः पिनद्धफलितश्यामस्वपूगद्रुमाः ।

---

(७४) यः ईदृशीं परमसुन्दरीं प्रियां मनसा "न तु कायेन" मुहूर्त्तमपि "न तु बहुक्षणं" कामयिष्यते कामवासनाविषयीकरिष्यते, स नन्दनः कृतपुण्य एव, पुण्यकर्म्मणा विना ईदृक्सुन्दरप्रियायाः क्षणं मनसा कामवासनाविषयीकरणमप्यसम्भवमिति भावः। एतेन मकरन्दकृतवेशविन्यासस्यातीव नैपुण्यं सूचितम्।

(७५) उद्वाहमङ्गलार्थे देशाचारविहितवैवाहिकमङ्गलाचारानुष्ठानार्थे, अस्मद्विहारिकायाः मदीयाश्रमस्य: ( विहारो बौद्धाश्रमस्य संज्ञा, तस्मात् क्षुद्रार्थे कप्रत्ययेन स्त्रियां विहारिकेति सिद्धम् ) उद्यानवाटः उपवनभागः, तत्रैव उद्यानवाटे वैवाहिकं द्रव्यजातं उद्वाहोपयोगिगोरोचनामाल्यचन्दनादिद्रव्यसमूहः, अवलोकितया तन्नामधेयया कयाचिन्मदीयशिष्यया सुविहितं सुसज्जितं। तदाच तत्र गत्वा वैवाहिकी क्रिया सम्पाद्यतामिति भावः। भूयश्च—पुनश्च।

(७६) गाढेति। गाढ़या अतिशयया उत्कण्ठया प्रियविरहजनितौत्सुक्येन कठोरः प्रौढ़ः यः केरलवधूनां केरलदेशीयवनितानां ( एतेषां पदानामुपादानं पाण्डुत्वातिशयद्योतनार्थं ) गण्डः

---

(৭৩) (মকরন্দ প্রবেশ করিয়া হাসিতে হাসিতে) বৎস আমি মালতী হইয়াছি। (সকলে কৌতুহলের সহিত দেখিতে লাগিল।

(৭৪) মাধব (মকরন্দকে আলিঙ্গন করিয়া উপহাসের সহিত) ভগবতি! যে নন্দন এইরূপ সুন্দরী প্রিয়াকে মুহূর্ত্তের জন্যও মনে মনে কামবাসনার বিষয়ীভূত করিবে, সেই নন্দন অবশ্যই পুণ্য করিয়াছে।

(৭৫) কাম। বৎসে মালতি! ও বৎস মাধব! তোমরা এস্থান হইতে নির্গত হইয়া বৈবাহিক মঙ্গলাচারসম্পাদনের জন্য বনের মধ্য দিয়া আমার ক্ষুদ্র বৌদ্ধাশ্রমের পশ্চাদবস্থিত উপবনে গমন কর। আমার অন্যতম শিষ্যা অবলোকিতা সেইখানেই বৈবাহিক মঙ্গলাচরণের উপযোগী মাল্যচন্দনাদি দ্রব্যসমূহ সজ্জিত করিয়া রাখিয়াছে। পুনশ্চ—

कक्कोलीफलजग्धिमुग्धविकिरव्याहारिणस्तद्भुवो-
भागाः प्रेङ्खितमातुलुङ्गवृतयः, प्रेयो विधास्यन्ति वाम् ॥ (७६)
गत्वा च तत्रैव मकरन्दमदयन्तिकागमनं यावत् स्थातव्यम् । (७७)

---

कपोलः तद्वत् स्वच्छपाण्डुरः निर्म्मलपाण्डुवर्णाः छदाः पर्णानि येषां तैः ताम्बूलीपटलैः पर्णलता-समूहैः पिनद्धाः आच्छादिताः फलिताः सञ्जातफलाः अत एव आनम्राः फलभारेण किञ्चिदवनता-पूगद्रुमाः गुवाकवृक्षाः येषु तथाभूताः। कक्कोलीफलानां वदरीफलानां ( कक्कोली वदरी कोली-त्यनेकार्थः ) ( कङ्कोलीति पाठे तु कङ्कोलीफलानां कोलफलानामित्यर्थः ) जग्ध्या भक्षणेन मुग्धाः मनोहराः विकिराणां पतत्रिणां ( नगौको वाजिविकिरविविष्किरपतत्रिणः इत्यमरः ) व्याहाराः लपितानि ( व्याहार उक्तिर्लपितमित्यमरः ) आतिशय्येन सन्ति एषामिति तथोक्ताः। ( अतिशयार्थे इनप्रत्ययः, अतएव बहुव्रीहिणा तादृशार्थप्रत्यायनासम्भवान्न "न कर्म्मधारया-न्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः" इत्यनुशासनविरोध इति मन्तव्यम ) तथा प्रेङ्खिता वातेन सञ्चालिता मातुलुङ्गानां कोलङ्गवृक्षाणां वृत्तिर्वेष्टनं येषु तादृशाः तद्भुवोभागाः अमद्विहारिका-पश्चाद्वर्त्त्युपवनप्रदेशाः वां युवयोः प्रेयः प्रीतिं विधास्यन्ति जनयिष्यन्ति।

अत्र सम्भोगसाधनतया प्रसिद्धानां ताम्बूललतादीनां लाभः, पक्षिकलरवेण परस्परप्रणया-लापस्यान्यैरश्रवणं, मातुलुङ्गवेष्टनवत्त्वेनान्येषां सहसा प्रवेशस्यासम्भवः, परैरात्मनोरनवलोकनञ्च व्यज्यत इति वस्तुना वस्तुध्वनिः।

अत्र प्रथमचरणे समासगतोपमा, एवं यथायथं वृत्त्यनुप्रासच्छेकानुप्रासश्चालङ्कारा इति तेषां संसृष्टिः। शार्द्दूलविक्रीड़ितं वृत्तम्।

(७७) स्थातव्यमिति, तथाच मदयन्तिकामकरन्दयोरपि विवाहोपचरमङ्गलाचारादिकं तत्रैव सम्पादयिष्यत इत्याशयः।

---

(৭৬) যে স্থানে গুবাকবৃক্ষসকল অতিশয় প্রিয়বিরহজনিত ঔৎসুক্য বশতঃ প্রৌঢ় কেরল দেশীয় স্ত্রীদিগের কপোলদেশের ন্যায় নির্ম্মল ও পাণ্ডুবর্ণ পর্ণযুক্ত তাম্বূললতায় পরিবেষ্টিত এবং ফলভরে অবনত, যে স্থানে বদরীফল-ভক্ষণে পক্ষিদিগের মনোহর কলরব হইতেছে ও যে স্থানে বায়ু সঞ্চালিত মাতুলুঙ্গ বৃক্ষের বেষ্টন আছে, তাদৃশ সেই উপবন ভূমিভাগ তোমাদের প্রীতি উৎপাদন করিবে।

(৭৭) এবং সে স্থানে যাইয়া মকরন্দ ও মদয়ন্তিকার গমন পর্য্যন্ত থাকিবে।

मद। [कर्णौ पिधाय।] अहो! अदिक्कमो। अहो! पमादो। सहि लवङ्गिए! असमत्थह्मि दे मुहं पि संपदं दंसिदुं तधावि पहवामि त्ति किं पि मन्तइस्सं (द)।

लव। साधीणो दे अअं जणो (ध)।

मद। चिट्ठदु ज्जेव्व मह भादुणो दुस्सीलदा अवरिट्ठाणं अ। तुह्मेहिं ईदिसो वि सम्मदं जधा चित्तमणुवत्तनीओ जेण भत्ता एसो

---

(द) अहो! अतिक्रमो। अहो! प्रमादः। सखि लवङ्गिके! असमर्थास्मि ते मुखमपि साम्प्रतं दर्शयितुं, तथापि प्रभवामीति किमपि मन्त्रयिष्ये।

(ध) स्वाधीनस्तेऽयं जनः।

---

(थ) अथ किमिति महान् वाचापराधः कृत एवेत्यर्थः। तदपराधस्य स्वरूपं दर्शयितु-माह—श्रुतमिति।

(द) कर्णौ पिधायेति अश्राव्यत्वद्योतनार्थं हस्ताभ्यां कर्णावाच्छाद्येत्यर्थः। अहो इवं खेदद्योतकम्। अतिक्रमः मद्भ्रातृकृतं मालतीमर्यादालङ्घनम्। प्रमादः मद्भ्रातुरनवधानता। विशुद्धचरित्रां सद्वंशोत्पन्नां सरलां मालतीं प्रत्येवमसङ्गतवाक्यप्रयोगादिति भावः। असमर्था-स्मीति, भ्रातृकृतमपराधमाकलयन्ती तव स्थाने मुखप्रदर्शनमपि लज्जाकरं मन्ये इत्यर्थः। प्रभवामि परमप्रीतिवशेन त्वयि मत्प्रभुत्वमस्ति इति हेतोः किमपि मन्त्रयिष्ये सखिभावेन किञ्चित् कथयिष्यामीत्यर्थः।

(ध) अयं मल्लक्षणः जनः ते तव स्वाधीनः सखिभावेन वशीभूतः तथाच यथेच्छ-मभिधातुं शक्नोषीति भावः।

---

(थ) বুদ্ধ। আর কি বলিব? "কৌমার কুলটা তোমা দ্বারা সম্প্রতি আমার কোনও প্রয়োজন নাই" এই কথা বলিতে আমরাই শুনিয়াছি।

(দ)। মদ। (কর্ণ আচ্ছাদন করিয়া) অহো! (আমার ভ্রাতার) অতিক্রম, অহো! (আমার ভ্রাতার) অনবধানতা। সখি লবঙ্গিকে! সম্প্রতি আমি তোমাকে মুখ দেখাইতেও অসমর্থ, তথাপি পরম প্রীতিবশে তোমার প্রতি আমার প্রভুত্ব আছে বলিয়াই কিছু বলিতেছি।

(ধ) লব। আমি তোমার স্বাধীন (অতএব যাহা ইচ্ছা তাহাই বলিতে পার)।

अलीअं मालदिं जाणीमो। केण वा कठोरकेदअगब्भविब्भमाअ-
मअदोव्वल्लणिव्वत्तिदसुंदरत्तणविसेसं माहवसहत्थणिम्माविदबउला-
वलीविरइदकण्ठावलम्बमेत्तसंधारिदजीवणं मालदीए माहवस्स अ
पभातचन्दमण्डलापाण्डुरपरिक्खामरमणीअदंसणं ण विभाविदं
सरीरं। किं च तद्दिअसे कुसुमाअरुज्जाणपेरन्तरच्छामुहसमागमे
सविब्भमुल्लसिदकोदूहलुप्फुल्लपसरन्तणअणुप्पलबहलविलासमसिण-
सञ्चारचारुतारआविराअन्तविब्भमा अणङ्गणाटआआरिअसव्वाआरो-

---

निर्व्वर्त्तितसुन्दरत्वविशेषं माधवस्वहस्तनिर्म्मितबकुलावलीविरचितकण्ठावलम्बनमात्रसन्धारितजीवनं
मालत्या माधवस्य च प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामरमणीयदर्शनं न विभावितं शरीरम्।
किञ्च। तद्दिवसे कुसुमाकरोद्यानपर्य्यन्तरथ्यामुखसमागमे सविभ्रमोल्लसितकौतूहलोत्फुल्ल-
प्रसरन्नयनोत्पलबहलविलासमसृणसञ्चारचारुतारकाविराजमानविभ्रमा अनङ्गनाट्याचार्य्यसर्व्वा-

---

विरहजनितदौर्बल्येन निर्व्वाहितः सम्पादितः सुन्दरत्वविशेषः सौन्दर्य्यातिशयः यस्मिन् तथा-
भूतम्, तथा माधवस्य स्वहस्तनिर्म्मितया बकुलावल्या बकुलकुसुमस्रजा विरचितः कृतः यः कण्ठा-
वलम्बः गलदेशालम्बनं, तन्मात्रेण सन्धारितं जीवनं येन तथाभूतं मालत्याः शरीरं, प्रभातचन्द्र-
मण्डलवत् आपाण्डुरं ईषत् पाण्डुवर्णं परिक्षामं सततदुश्चिन्तया कृशतापन्नं रमणीयदर्शनं मनोज्ञा-
वलोकनञ्च तत्तथोक्तं माधवस्य च शरीरं केन वा जनेन न विभावितं न लक्षीकृतं अपि तु
सर्व्वैरेव लक्षीकृतमित्यर्थः। तदात्र कथं गोपायसीति भावः।

किञ्चेति अपिचेत्यर्थकम्। कुसुमाकरोद्यानपर्य्यन्तं मदनोद्यानसीमकं यत् रथ्यामुखं तत्र
समागमे उभयोः सम्मिलने सति सविभ्रमं सविलासं यथा स्यात्तथा उल्लसितयोः उच्छ्वसितयोः,
कौतूहलेन आनन्देन उत्फुल्लयोः विकसितयोः प्रसरतोः दर्शनीयस्थानं गच्छतोश्च नयनोत्पलयोः
बहलविलासेन निरतिशयविभ्रमेण मसृणसञ्चारेण निर्म्मलसञ्चालनेन च चारुमनोहरतारके

---

জীবনকে মাধবৈকময় বলিয়া জানি। পরিণত কেতকীকুসুমের অভ্যন্তর-
দেশবৎ পাণ্ডুবর্ণ হস্তপদাদি অবয়বের দৌর্ব্বল্য বশতঃ যাহার সৌন্দর্য্যবিশেষ
সম্পাদিত হইয়াছে, এবং কেবল মাধবের স্বহস্তনির্ম্মিত বকুলমালার কণ্ঠাবলম্বন
দ্বারাই যে জীবন ধারণ করিয়াছে, তাদৃশ মালতীর শরীর এবং প্রভাত চন্দ্র-
মণ্ডলের ন্যায় ঈষৎ পাণ্ডুবর্ণ ক্ষীণও মনোজ্ঞদর্শন মাধবের শরীর কেনা লক্ষ্য

लव। सहि! कदमो उण सो महाणुहावोत्ति विसुमरिदं मए (र)।

मद। सहि सुमर सुमर जेण तस्सिं दिअसे विअडदुट्ठसावदावदेसकालगोअरं गदा असरणा तक्कालसंणिहिदेण जीविदप्पदाइणा पीअरभुअत्थम्भेण णिक्कारणबन्धवेण सअलभुवणेक्कसारणिअदेहोवहार-साहसं कदुअ परिरक्खिदम्हि। जेण अ दिढदाढाविदारिअविअड-मंसलुग्घाडपरिणाहविअक्खत्थलेण जरठजज्जरिदजवापीडहारिणा

---

(र) सखि कतमः पुनः स महानुभाव इति विस्मृतं मया।

(ल) सखि! स्मर स्मर येन तस्मिन् दिवसे विकटदुष्टश्वापदापदेशकालगोचरं गता अशरणा तत्कालसन्निहितेन जीवितप्रदायिना पीवरभुजस्तम्भेन निष्कारणबान्धवेन सकलभुवनैक-सारनिजदेहोपहारसाहसं कृत्वा परिरक्षितास्मि। येन च दृढदंष्ट्राविदारितविकटमांसलोद्घाट-

---

(र) मालतीमाधवानुरागजननादीपनं स्मरयितुं प्रकृतं मकरन्दं प्रति मदयन्तिकाया अनुरागप्रकारं तन्मुखादेव परिज्ञातुं कृतौ सत्यामपि विस्मृतिं प्रकटयति—सखीत्यादिना।

(ल) स्मरेति। विकटः भीषणः दुष्टः खलस्वभावः यः श्वापदः हिंस्रः स एव अपदेशः छद्म तस्य तदानुभवस्य कालस्य यमस्य गोचरं हिंसाप्रवृत्तिविषयतां गता प्राप्ता, अशरणा रक्षकहीना, असहायेति शेषः। तत्कालसन्निहितेन शार्दूलाक्रमण-कालनिकटवर्त्तिना, पीवरः स्थूलः भुजः बाहुः स्तम्भ इव यस्य तथाभूतेन, निष्कारणबान्धवेन निर्निमित्तबन्धुना येन महानुभावेन सकलभुवनेषु त्रिलोकेषु एकः अद्वितीयः सारः सर्व्वकर्म्म-निदानत्वात् श्रेष्ठः यो निजदेहः, तस्य उपहारे व्याघ्रायार्पणे साहसं कृत्वा निजशरीरार्पण-रूपेऽपि तत्र मृत्युभयमगणयित्वेत्यर्थः परिरक्षिता व्याघ्राक्रमणादुद्धारिता। दृढदंष्ट्राभिः कठिन-दशनैः विदारितं छिन्नं अत एव विकटं भयङ्करमुद्भटं मांसलं स्थूलं उद्घाटं उन्नतं

---

(র) লব। সখি! সেই মহানুভব কে ইহা আমি বিস্মৃত হইয়াছি।

(ল) মদ। সখি! সেই দিনে ভীষণ দুষ্ট হিংস্র জন্তুব্যপদিষ্ট যমের হিংসাবিষয়ীভূত রক্ষকহীন আমাকে তৎকালসন্নিহিত স্থূলবাহুস্তম্ভশালী জীবিতদাতা যেই নিষ্কারণ বান্ধব সকলভুবনের অদ্বিতীয় সারভূত নিজ দেহের উপহাররূপ সাহসাবলম্বন করিয়া রক্ষা করিয়াছেন, কঠিন দন্ত বিদারিত বিকট

वाक्णेक्कमणेण मम किदे विसहिदा अतिदुट्ठसद्दूलणहसिहावज्जप्पहारा मारिदो अ सो दुट्ठसावदमहारक्खसो त्ति (ल)। (२२)

लव। हुं मअरन्दो (व)

मद। [ सानन्दम्। ] पिअसहि! किं किं भणासि (श)

लव। णं भणामि मअरन्दो त्ति (ष)।

---

परिणाहिवचःस्थलेन जरठगर्जरितजवापीडहारिणा करुणैकमनसा मम कृते विसोढा अतिदुष्ट-शार्दूलनखशिखावज्रप्रहारा मारितश्च स दुष्टश्वापदमहाराक्षस इति।

(व) हुं मकरन्दः।

(श) प्रियसखि! किं किं भणसि।

(ष) ननु भणामि मकरन्द इति।

---

परिणाहि विशालञ्च वचःस्थलं यस्य तथाभूतेन, अत एव जरठं कठिनं जर्ज्जरितं छिन्नं भिन्नं जवापीड़ं जवाकुसुमशेखरं हरति रक्तत्वात् समीकरोतीति तथोक्तेन करुणा दयैव एका मनसि यस्य तथाभूतेन ( अन्यया निःसम्पर्कायां ममोद्धारायैतावत् कष्टाङ्गीकारासम्भवादिति भावः ) येन अतिदुष्टशार्द्दूलस्य नखशिखा नखराग्रभागा एव वज्राः तीक्ष्णकठिनत्वात् कुलिशानि तेषां प्रहाराः आघाताः मम कृते मदर्थे विषोढ़ाः। दुष्टश्वापद एव महाराक्षसः स मारितश्च येन, तं महापुरुषं स्मर स्मर इत्यर्थः।

(व) हुमिति स्मृतिद्योतकमव्ययम्। ( हुं स्मृतावप्यपाकृताविति मेदिनी )

(श) सानन्दमिति, प्रियतमनामश्रवणमवानन्दहेतुः। तन्नामशुश्रूषाया अनिवृत्तेः साग्रहं पृच्छति—किं किमिति।

---

স্থূল, উন্নত ও বিশাল বক্ষঃস্থলশালী কঠিন ও ... শেখরতুল্য, করুণৈকমনাঃ যেই মহাপুরুষ আমার জন্য অতি ... নখরাগ্রভাগরূপ বজ্রের প্রহার সহ্য করিয়াছেন ও দু... মহারাক্ষসকে মারিয়াছেন, তাহাকে স্মরণ কর, স্মরণ ...

(ব) লব। ঐ মকরন্দ।

(শ) মদ। ( আনন্দের সহিত ) প্রি...

(ষ) লব। "মকরন্দ" এই কথা বলি...

मद [सलज्जम् ।] सहि किं मं उवहससि । णं भणामि णिव्वावअन्ति मं तारिसस्स अप्पणिरवेक्खव्ववसाइणो किदन्तकवलिज्जन्त-जीविद-बलामोडिअपच्चाणअण-गुरुकोपकारिणो जणस्स सङ्कधासु णामगहणसुमरणाइं । तधा अ सो तुए वि गाढ़प्पहारवेअणारम्भ-विआरिदसरीरसङ्गलिदसेअसलिलुप्पीलो मोहमउलाअन्तणेत्तकन्दोट्ठजु-अलो भूमिविलग्गितासिलदाविट्ठम्भधीरधारिदसरीरभारो पच्चक्खोकिदो

---

(स) सखि ! किं मामुपहससि । ननु भणामि निर्वापयन्ति मां तादृशस्य आत्मनिरपेक्षव्यवसायिनः कृतान्तकवल्यमानजीवितबलात्कारप्रत्यानयनगुरुकोपकारिणो जनस्य सङ्कथासु नामग्रहणस्मरणानि । तथा च स त्वयापि गाढ़प्रहारवेदनारम्भविकारितशरीरसंगलितस्वेद-

---

सादृश्यपुरःसर"मिति दर्पणलक्षणात् लेशो नाम नाट्यं । वंशस्थविलं वृत्तम्, "वदन्ति वंशस्थविलं जतौ जरा"विति लक्षणात् ।

(स) सलज्जमिति, लवङ्गिकासन्निधौ रोमाञ्चादिप्रकटनमेव लज्जाहेतुः । आत्मनिरपेक्षं आत्मरक्षणापेक्षारहितं यथा स्यात्तथा व्यवसायिनः मत्परिरक्षणोद्योगिनः, कृतान्तेन यमेन कवल्यमानस्य शार्द्दूलाक्रमणव्यपदेशेन ग्रस्यमानस्य जीवितस्य मम जीवनस्य बलात्कारेण बल-प्रयोगेण यत् प्रत्यानयनं प्रत्याहारः, तेन गुरुकं अतिमहत् उपकरोतीति तथोक्तस्य, संकथासु परस्परालापेष्वपि नामग्रहणस्मरणानि नामोच्चारणपरिचिन्तनानि निर्व्वापयन्ति सान्त्वयन्ति । तथाच तदुपकारकृतज्ञतयैव मे तन्नामश्रवणोत्सुक्यादिकं न तु तदनुरक्ततयेति त्वदीयोपहासो न युज्यत इति भावः । स्वोक्तं समर्थयितुमाह—तथाचेति । गाढ़प्रहारेण दृढ़तरनखराघातेन यो वेदनारम्भः तेन विकारितात् शून्यविषयात् ( कुद्रार्थकधातोर्येयेच्छत्वेन सुखाकर्म्मणि क्तः ) संगलितः क्षरितः स्वेदसलिलोत्पीड़ः घर्म्मजलधारा यस्य तथाभूतः ! मोहेन मूर्च्छया मुकुलाय-

---

তুমি মকরন্দের কথাপ্রসঙ্গে অকস্মাৎ বিকল হইয়া রোমাঞ্চিতা হইলে কেন ? )

(ম) মদ। (লজ্জার সহিত) সখি ! আমাকে উপহাস করিতেছ কেন ? আত্মনিরপেক্ষভাবে আমার রক্ষণোদ্যোগ যিনি বলপ্রয়োগ দ্বারা ( শার্দ্দূলা-ক্রমণব্যপদেশে ) যম কর্ত্তৃক গ্রস্যমান আমার জীবনের উদ্ধার করিয়া মহা উপকার করিয়াছেন, তাদৃশ মহাপুরুষের কথাপ্রসঙ্গে নামগ্রহণ ও স্মরণ

दिउणबाहुदण्डावेढणणिअन्तिदं पिअसहि परूढ़सद्दूलकठोर-
कररुहप्पहारविअड़पत्तावलीपसाहणुत्ताणवच्छत्थलणिट्ठुरणिवे-
सणिसहं मं कदुअ सावेअविहुअमत्थआविद्धकवरीणिहिदकर-परिग-
होवणिदुण्णमिदणिच्चल-मुहावअव-सच्छन्दविलसिदविअड्ढवअण-

---

(भ) द्विगुणबाहुदण्डवेष्टननियन्त्रितां प्रियसखि ! प्ररूढ़शार्द्दूलकठोरकररुहप्रहारविकट-
पत्रावलीप्रसाधनोत्तानवक्षःस्थलनिष्ठुरनिवेशनिःसहां मां कृत्वा सावेगविधुतमस्तकाविद्धकवरी-
निहितकरपरिग्रहपुञ्जीकृतोन्नामितनिश्चलमुखावयवस्वच्छन्दविलसितविदग्धवदनकमलो वामगण्ड-

---

पर्य्यस्ताभ्यां मदङ्गेषु सन्निवेशिताभ्यां लोचनाभ्यां चक्षुर्भ्यां विभावितः परिज्ञातः चित्तस्य मनसः
सारः स्थिरांशः प्रकृताभिप्रायः यस्यास्तथाभूतां मां उपहसति "अयि प्रस्थानीयतापि कथं
पुनस्तिष्ठसि" इत्यादि वाक्यावलीभिः उपहासं करोति ।

(भ) द्विगुणेति । द्विगुणाभ्यां एकैकहस्तेनैव समस्ताकलनाद्द्विगुणीकृताभ्यां बाहुदण्डाभ्यां
आवेष्टनेन सम्यक् परिवेष्टनेन नियन्त्रितां आवद्धां कृतगाढ़ालिङ्गनामिति यावत् । प्ररूढ़ं
समुत्पन्नं शार्द्दूलस्य व्याघ्रस्य कठोरकररुहप्रहारः दृढ़तरनखराघातजनितचिह्नान्येव विकट-
पत्रावली विकचपत्ररचनापंक्तिः सैव प्रसाधनं अलङ्कारः यत्र तादृशं उत्तानं उन्नतञ्च यत्
वक्षःस्थलं तत्र निष्ठुरनिवेशेन घनसन्निवेशनेन निःसहां अवशां । सावेगं त्वरान्वितं यथा स्यात्तथा
विधुतेन तच्चुम्बनादिप्रतिरोधसमीहया सञ्चान्दोलितेन मस्तकेन मदीयशिरसा आविद्धा
स्खलिता या कवरी—मदीयकेशसमूहः तस्यां निहितेन केशसंयमनार्थं स्थापितेन करेण
हस्तेन यः परिग्रहः मदीयकेशसमूहस्यैव ग्रहणं तेन पुञ्जीकृतैः संयमितैः केशैरित्यर्थः,
उन्नामिताः किञ्चिदूर्द्ध्वमुखीकृताः निश्चलाः केशाकर्षणजनितदुःखसम्भवेन मुखावातिपारवश्येन

---

পরিজ্ঞাত হওয়ায় "এইরূপ করিও না" ইত্যাদি প্রতিকূলবাদিনী হইলেও
আমাকে "গমনোদ্যতা হইয়াও কেন গেলে না ?' ইত্যাদি বাক্য দ্বারা উপহাস
করিতেছিল।

(ভ) তৎপরে দ্বিগুণীকৃত বাহুবেষ্টনে আবদ্ধ আমাকে ব্যাঘ্রের দৃঢ়তর-
নখরাঘাতজনিত চিহ্নরূপ বিকচপত্ররচনাপংক্তি যাহাতে অলঙ্কাররূপে সমুৎপন্ন
তাদৃশ সমুন্নত আমার বক্ষঃস্থলে গাঢ় সন্নিবেশবশতঃ (একেবারে) অবশ
করিয়া (চুম্বনাদি প্রতিরোধ বাসনায়) আবেগের সহিত মস্তক সমান্দোলনে
স্খলিত আমার কবরীতে বিন্যস্ত তাঁহার হস্ত দ্বারা পরিগ্রহবশতঃ আমার কেশ-

एव्वंणाम पिअसहि ! समक्खं सव्वं अणुभविअ झत्ति पडिवुद्धा सुणारखसंणिहं पुणो वि मन्दभाइणी विभावेमि जीअलोअं त्ति (ज)।

लव। [विहस्य।] सहि मदअन्तिए! फुडं आचक्खेहि। अध तस्सिं अवसरे सिणेहविब्भमुम्मोसहासविअसन्तवुडरच्छिदालोअणणिरूविदं परिअणादो गोअणिज्जं दे पिअस्वसा मूलं सअणिज्जपच्छदवडावारिदं भोदि किं ण वेत्ति (ट)।

---

(ज) एवं नाम प्रियसखि! समक्षं सर्वमनुभूय झटिति प्रतिबुद्धा शून्यारण्यसन्निभं पुनरपि मन्दभाग्या विभावयामि जीवलोकमिति।

(ट) सखि मदयन्तिके! स्फुटमाचक्ष्व। अथ तस्मिन्नवसरे स्नेहविभ्रमोन्मिषद्धासविक-

---

(ज) एवं स्वप्नावस्थामभिधाय जागदवस्थामाह—एवमिति। एवं नाम अनेन प्रकारेण, सर्वं सुरतपर्यन्तं क्रियाकलापं, समक्षं प्रत्यक्षं, झटिति सहसा, प्रतिबुद्धा जागरिता, मन्दभाग्या हतभागधेया अहं जीवलोकं संसारं पुनरपि शून्यारण्यसन्निभं जागरणमात्रेणैव तादृशानुभवादपि प्रियतमस्यादर्शनात् विजनकान्तारतुल्यं विभावयामि मन्ये। इति गन्धो- [illegible] पूर्वोक्तनिशावर्णनान्तेति।

(ट) [illegible]

---

बुद्ध। सहि मदअन्तिए! भणिस्सं दाणिं दे किं वि जइ ण वीसासभङ्गं करेसि (ण)।

मद। सहि! किं पुणो वि पणअभङ्गेण किदावराहो अअं जणो जेण एव्वं मन्तेसि। पिअसहि! तुमं लवङ्गिआए सह सम्पदं मे हिअअं (त)।

बुद्ध। जइ दे कधं वि मअरन्दो पुणो वि दंसणपहं ओदरदि, तदो किं तुए कादव्वं (थ)।

---

(ण) सखि मदयन्तिके! भणिष्यामि इदानीं ते किमपि यदि न विश्वासभङ्गं करोषि।

(त) सखि किं पुनरपि प्रणयभङ्गेन कृतापराधोऽयं जनो, येनैवं मन्त्रयसि। प्रियसखि! त्वं लवङ्गिकया सह साम्प्रतं मे हृदयम्।

(थ) यदि ते कथमपि मकरन्दः पुनरपि दर्शनपथमवतरति, ततः किं त्वया कर्त्तव्यम्।

---

(ढ) मदेति। एवं अनेन प्रकारेण। मालत्या अपि तथाविधावस्थाया अलीकत्वादिति भावः।

(ण) बुद्धेति। विश्वासभङ्गं आत्माभिप्रायगोपनेन मयि विश्वास विघूरतिम्।

(त) मदेति। प्रणयभङ्गेन विश्वासच्छेदनेन, (प्रणयः प्रेम्णि विस्रम्भे याच्ञाप्रसरयोरपीति विश्वः) अयं—मल्लक्षणः। पुनरपीत्यनेन पूर्व्वं-कदाचिदनुचरचितप्रणयभङ्गो मदयन्तिकया कृत इति गम्यते। हृदयं हृदयतुल्या, तथा च युवयोः सकाशेनास्ति मे किञ्चिदपि गोपनीयमिति निःसन्देहं कथयेति भावः।

(थ) वक्तव्यमभिधातुं भूमिकां करोति—यदीत्यादिना।

---

(ঢ) মদ। সখি! মালতীকে এইরূপে উপহাস করিও না।

(ণ) বুদ্ধ। সখি মদয়ন্তিকে! সম্প্রতি তোমাকে কোন কথা জিজ্ঞাসা করি (যদি আত্মভাব গোপন করিয়া) বিশ্বাস ভঙ্গ না কর।

(ত) মদ। সখি! পুনরায়ও কি বিশ্বাস ভঙ্গ দ্বারা আমি অপরাধ করিয়াছি যে, এরূপ বলিতেছ? লবঙ্গিকার সহিত তুমিই সম্প্রতি আমার হৃদয় তুল্য।

(থ) বুদ্ধ। যদি মকরন্দ কোন প্রকারে পুনরায় তোমার দর্শনপথে অবতরণ করে, তবে তুমি কি কর?

मद। एक्केक्कावअवणिव्वण्णणणिच्चले चिरं लोअणे णिव्वाव-इस्सं (द)।

बुद्ध। अध सो वि मम्महवलक्कारिदो कन्दप्पजणणिं तुमं रुक्मिणिं विअ पुरिसोत्तमो सअंगाहसाहसेण सहधम्मचारिणिं करेदि तदो का पडिवत्ती ? (ध)

मद। [ निःश्वस्य। ] कीस मं एत्तिअं आसासेसि (न)।

---

(द) एकैकावयवनिर्वर्णननिश्चले चिरं लोचने निर्वापयिष्यामि।

(ध) अथ सोऽपि मन्मथबलात्कारितः कन्दर्पजननीं त्वां रुक्मिणीमिव पुरुषोत्तमः स्वयंग्राहसाहसेन सहधर्मचारिणीं करोति, ततः का प्रतिपत्तिः ?।

(न) किं मामेतावदाश्वासयसि।

---

(द) मदेति। एकैकावयवे-इत्यादौ, निर्वर्णने तवावयवानां सौन्दर्यातिशयवत्त्वात् स्वभावतः चञ्चले निश्चले परमप्रीतिविषयत्वात् निष्पन्दे लोचने मदीयनेत्रे निर्वापयिष्यामि शीतलयिष्यामि। एतेनौत्सुक्यदर्शनेच्छा सूचिता।

(ध) बुद्धेति। मन्मथस्य कामस्य बलात्कारः बलेन प्रवर्त्तनं तद्भावो यस्येति मन्मथ-बलात्कारितः कामेनैव बलाभिभूत इत्यर्थः, सोऽपि मकरन्दोऽपि। पुरुषोत्तमः श्रीकृष्णः उत्तम-पुरुषश्च, कन्दर्पजननीं भाविकन्दर्पप्रसविनीं कामविकारोत्पादिकाञ्च। स्वयंग्राहसाहसेन स्वयं-ग्रहणमेव साहसं तेन, बलाहरणेनेति यावत्, सहधर्म्मचारिणीं धर्मपत्नीं, तदानीं का प्रतिपत्तिः किङ्कर्त्तव्यता ? तत्कर्म स्वयंकर्त्तुं तवाभिमतमस्ति नवेति भावः।

अत्र रुक्मिणीमिवेति पूर्णोपमालङ्कारः, एवं मदयन्तिकाविषयकोद्घाटनेन वचनाभिधेया-नुबन्धात् "दाक्षिण्यं" नाम नाट्यालङ्कारः, यथोक्तं दर्पणे—"दाक्षिण्यं चेष्टया वाचां परचित्तानुवर्त्तन"मिति।

---

(দ) মদ। (নিরতিশয় সৌন্দর্য্যবশতঃ) তোমার দুখানি এক এক অবয়বে স্বভাবতঃ চঞ্চল আমার নেত্রযুগল শীতল করি।

(ধ) বুদ্ধ। পুরুষোত্তম বিষ্ণু যেমন ভাবি কন্দর্পপ্রসবিত্রী রুক্মিণীকে স্বয়ং-গ্রহসাহসে ( অর্থাৎ অপহরণ করিয়া ) ধর্ম্মপত্নী করিয়াছিলেন, সেইরূপ মকরন্দও যদি কামাভিভূত হইয়া তোমাকে স্বয়ংগ্রহসাহসে ধর্ম্মপত্নী করে, তবে তোমার কি কর্ত্তব্য ? ( অর্থাৎ সে বিষয়ে তোমার অভিমত আছে কি না ) ?

णन्दणं णिवृभक्तिअ से पादपङ्गं अवृभत्थिअ मालदीए उवरि अनुऊलइस्सं (य)। इति उत्थाय गन्तुमिच्छति।

मकरन्दो मुखमुद्घाट्य हस्तेन गृह्णाति। (७)

मद। सहि मालदि! विप्पवुद्धासि [ विलोक्य सहर्षं ससाध्वसञ्च ] अम्मो अण्णं ज्जेव्व किं पि एदं वट्टदि (र)।

मक। रम्भोरु! संहर भयं चमते विसोढु-
मुत्कम्पितं स्तनभरस्य न मध्यभागः।

---

(र) सखि मालति! विप्रवुद्धासि। अम्मो अन्यदेव किमप्येतद्वर्त्तते।

---

नेपथ्यातुस्तिरस्कारणस्यानुचितत्वादाह—सपादेति। वा अथवा, सपादवन्दनं पादवन्दनेन सह यथा स्यात्तथा अभ्यर्थ्य "मालतीं प्रति सदयो भवे"ति याचित्वा, अनुकूलयिष्यामि अनुकूलं करिष्यामि।

(७) गृह्णातीति मदयन्तिकाहस्तमिति शेषः।

(र) मदेति; प्रतिबुद्धासि जागरितासि, किमित्यर्थः। चिरप्रार्थितस्य मकरन्दस्याचिन्तितोपनतं दर्शनमत्र हर्षहेतुः, तत्समक्षमेव निर्लज्जया मया गुप्तः सर्व्वो मनोभावः प्रकटीकृत इति किमद्य मन्यत इति परिचिन्तनं कन्यायाः पुरुषस्पर्शस्यानौचित्यञ्च भयहेतुः। "अम्मो" इति विस्मयद्योतकमव्ययम्। अन्यदेव मदवगतान्मालत्यवस्थानाद्भिन्नमेव, किमपि अनिर्व्वचनीयं एतन्ममाराध्यस्य मकरन्दस्यावस्थानं।

(८) रम्भोर्व्विति। हे रम्भोरु! कदलीस्तम्भाकारोरुदेशे! भयं साध्वसं संहर मुञ्च।

---

বন্দনে অভ্যর্থনা করিয়া মালতীর উপরে অনুকূল করিব। ( এই কথা বলিয়া উঠিয়া যাইতে ইচ্ছা করিল )।

(৭) ( মকরন্দ মুখ উদ্ঘাটিত করিয়া হস্তদ্বারা মদয়ন্তিকার হস্তধারণ করিল )।

(র) মদ। সখি মালতি! জাগরিতা হইয়াছ? ( দেখিয়া হর্ষ ও ভয়ের সহিত ) অহো আমার জ্ঞানের অতীত অনির্ব্বচনীয় ( মকরন্দের অবস্থানরূপ ) ব্যাপার বর্ত্তমান।

(৮) মক। অয়ি! রম্ভোরু! ভয় পরিত্যাগ কর। যেহেতু ( অত্যন্ত

अव। तुह ज्जेव्व गअधोवसासेण एसा लवङ्गिअं सुमरिअ, ताए पउत्तिणिमित्तं उत्तम्मदि। (च)

माध। ननु इदानीमेव मया कलहंसकः प्रहितः, प्रच्छन्नः सन्निपत्य नन्दनावासप्रवृत्तिमुपलभस्वेति। [साशंसं।] अवलोकिते! अपि नाम बुद्धरक्षिताप्रयत्नः सफलोदर्क एव मदयन्तिकां प्रति स्यात्? (१८)

अव। कुदो सन्देहो महाणुभावस्स? महाभाअ! पढमं ज्जेव्व सद्दूलणहरालङ्किदस्स मअरन्दस्स माहविरामअङ्कसवं णिवेद-

(च) तवैव गपयोपन्यासेन एषा लवङ्गिकां स्मृत्वा तस्याः प्रवृत्तिनिमित्तमुत्ताम्यति।

(छ) कुतः सन्देहो महानुभावस्य? महाभाग! प्रथममेव शार्दूलनखरालङ्कृतस्य

(च) गपयोपन्यासेन "पापितासी"त्यादि पूर्व्वोक्तगपद्यप्रयोजकवचने लवङ्गिकाया नामाभिधानेन, तस्याः लवङ्गिकायाः प्रवृत्तिनिमित्तं मकरन्देन सह गतायास्तस्याः किं वृत्तमिति वृत्तान्तप्राप्त्यर्थं, उत्ताम्यति उत्कण्ठिता भवति।

(१८) माधेति। प्रच्छन्नः गुप्तः अन्यैरपरिज्ञात इति यावत्, सन्निपत्य गत्वा नन्दनावास-प्रवृत्तिं नन्दनवासगृहस्य वृत्तान्तं लभस्व जानीहि। तथाच मत्करणे। कलहंसः आगत्य तद्वृत्तान्तं ज्ञापयिष्यतीति भावः। सफलः मकरन्देन सह मदयन्तिकाया निर्गमनरूपेणाभिलषित-फलेन सहितः उदर्कः उत्तरफलं यस्य तथाभूतः बुद्धरक्षिताप्रयत्नः मदयन्तिकां प्रति स्यात् भवेत् अपिनाम किं? बुद्धरक्षिताप्रयत्नेन मदयन्तिका मकरन्देन सह पुरान्निःसरेत् किमित्यर्थः?

(छ) अवेति। महानुभावस्य भवतः, कुतः सन्देहः मकरन्देन सह मदयन्तिकाया-

(চ) অব। তোমারই "পাপিতাসি" ইত্যাদি বাক্যে নামোচ্চারণ বশতঃ লবঙ্গিকাকে স্মরণ করিয়া তাহার সংবাদ পাওয়ার জন্য মালতী উৎকণ্ঠিতা হইয়াছে।

(১৮) মাধ। সম্প্রতিই আমি কলহংসকে পাঠাইয়াছি যে, গোপনে যাইয়া নন্দনের বাসগৃহের বৃত্তান্ত জানিয়া আস। (আশংসার সহিত) অবলোকিতে! মদয়ন্তিকার প্রতি বুদ্ধরক্ষিতার প্রযত্ন উত্তরফল মকরন্দের সহিত মদয়ন্তিকার আগমনরূপ আনন্দের প্রতিফলিত ফলশালী হইবে কি?

प्रेम्णा मद्ग्रथितेति या प्रियसखीहस्तोपनीतानया,
विस्तारिस्तनकुम्भकुड्मलभरोत्सङ्गेन सम्भाविता ।
सम्प्राप्ते त्वथ पाणिपीड़नविधौ मां प्रत्यपेताशया
या मय्येव लवङ्गिकेत्यवगते सर्वस्वदायीकृता ॥ (२०)

(२०) मालाया वैशिष्ट्यं दर्शयति—प्रेम्णेत्यादिना। या वकुलमाला अनया मालत्या मद्ग्रथिता मयैव सगुणीकृत्य विरचिता इति हेतोः प्रियसख्याः लवङ्गिकायाः हस्तेन उपनीता समानीता प्रेम्णा अनुरागेण विस्तारिस्तनकुम्भकुट्मलभरोत्सङ्गेन विशालभारवत् कुचकलस-कलिका क्रोड़ेन गले विधारणात् अवनानतया विशालकुचोपरिसंस्थापनेनेति यावत्, सम्भाविता गौरवं प्रापिता। तु किन्तु अथ अनन्तरं पाणिपीड़नविधौ नन्देनेन सह विवाहोद्योगे सम्प्राप्ते नन्दनानुरोधादुपगते सति मां प्रत्यपेताशया मत्प्राप्तौ हताशया सत्या लवङ्गिकेत्यवगते लवङ्गिकेङ्गितानुसारेण तत्क्षणपरित्यक्ततदीयस्थाने दण्डायमानतया लवङ्गिकात्वेनैवावधारिते इत्यर्थः (पश्चाद्गतमालाप्रदानवृत्तान्तोऽत्रानुसन्धेयः) मय्येव या वकुलमाला सर्व्वस्वदायीकृता सर्व्वस्ववदर्पिता। (दीयत इति दायः भावाधिकारात् कर्म्मणि घञ्, सर्व्वस्वमिव दायः सर्व्वस्वदायः, असर्व्वस्वदायः सर्व्वस्वदायः कृत इति सर्व्वस्वदायीकृता) तथाचेयमेव वकुलमाला मम जीवितादप्यधिकेति मदयन्तिकालाभसम्पादननिवेदकाय पारितोषिकत्वेन मया दास्यत इति भावः।

अत्र स्तनयोः स्थूलत्वेन कुम्भसादृश्यं वर्द्धिष्णुतया च कुट्मलसादृश्यमिति लुप्तोपमालङ्कारः। शार्द्दूलविक्रीड़ितं वृत्तम्।

অবলোকন করিয়া) মালতীর প্রথম দর্শনজনিতানুরাগের সাক্ষীভূত মদনোদ্যানের অলঙ্কারস্বরূপ ও শ্রীযুক্ত বকুলবৃক্ষের কুসুমনির্ম্মিত এই মালা আছে।

(২০) সেই বকুলমালা আমার গ্রথিত বলিয়া এই মালতী কর্ত্তৃক প্রিয়সখী লবঙ্গিকাহস্তে সমানীত হইয়া অনুরাগবশতঃ বিশালভারবৎ স্তনকুম্ভ-কুট্মলোৎসঙ্গ দ্বারা গৌরবান্বিত হইয়াছিল। কিন্তু অনন্তর নন্দনের সহিত বিবাহের উদ্যোগ উপগত হইলে আমার প্রাপ্তি বিষয়ে হতাশা মালতী কর্ত্তৃক লবঙ্গিকারূপে অবধারিত আমাতেই (আবার) যে বকুলমালা সর্ব্বস্ববৎ অর্পিত হইয়াছিল। (আমার জীবনাধিক সেই বকুলমালাই পারিতোষিক প্রদান করিব)।

[ प्रविश्य कपालकुण्डला । ] आः पापे ! तिष्ठ । (२८)

मालती । [ सत्रासम् । ] हा अज्जउत्त ! [ इत्यर्द्धोक्ते वाक्‌स्तम्भं नाटयति ]। (न)

कपा । [ सक्रोधम् । ] नन्वाक्रन्द, नन्वाक्रन्द । (२९)

त्वद्वल्लभः क्व स तपस्विजनस्य हन्ता,

कन्याविटः पतिरसौ परिरक्षतु त्वाम् ।

---

(न) हा आर्य्यपुत्र !

---

करोति। सातङ्कमिति, दक्षिणाक्षिस्पन्दनमेवातङ्कहेतुः, स्त्रीणां दक्षिणनयनस्पन्दनस्यानिष्टसूचकत्वात्। स्फुरितं स्पन्दितं वामेतरेण दक्षिणेन। उपविशतीति गमनाभिलाषे सत्यपि निदारुणया किञ्चिद्दूरं गत्वैवोपविष्टा भवतीत्यर्थः।

(२८) प्रविश्येति। गुरुजनजनितक्रोधपरवशा, सततं मालतीमाधवानिष्टसाधने चेष्टमाना कपालकुण्डला लब्धावसरा समागत्येत्यर्थः। मालतीं प्रत्याह—"आः पापे! तिष्ठ" इति। "उल्केटी रोषभाषण"मिति लक्षणादस्य "उल्केटी" नाम विमर्शसन्धेरङ्गम्।

(न) सत्रासमिति, सन्ततिरोषपरवशायाः कपालकुण्डलाया दर्शनमेवात्र त्रासहेतुः। वाक्‌स्तम्भं स्वरोच्चाराराहित्यम्।

(२९) नन्विति सम्बोधने। आक्रन्द आह्वानं रक्षितुं माधवमाह्वय। (क्रन्दने रोदनाह्वाने इत्यमरः) क्रोधाद्द्विरुक्तिः। तदाह्वानेऽपि तवात्र परित्राणं न स्यादिति भावः।

(३०) त्वद्वल्लभेति। तपस्विजनस्य तपसा उग्रसाधनपुणेरघोरघण्टस्य हन्ता विनाशकः (तदात्र नासौ वीरः परन्तु तपस्विहन्तृत्वेन महापातकीति भावः) त्वद्वल्लभः त्वां प्रति बद्धस्नेहः

---

(পাদবিক্ষেপ করিতে লাগিল) (আতঙ্কের সহিত) আমার দক্ষিণ লোচন স্পন্দিত হইতেছে। (উপবেশন করিল)।

(২৮) কপা। (প্রবেশ করিয়া) আঃ পাপে! থাক।

(ন) মাল। হা আর্য্যপুত্র! (অর্দ্ধোক্তে বাক্যরোধের অভিনয় করিতে লাগিল)।

(২৯) কপা। (ক্রোধের সহিত) (আর্য্যপুত্রকে) আক্[illegible] আহ্বান কর।

(৩০) তপস্বিজনের হন্তা তোমার প্রতি প্রণয়শালী সেই মাধব কোথায়?

पराणीअं पविठ्ठो, तदो पड़िणिउत्तह्मि मन्दभाइणी, सुणामि अ घरे घरे गुणाणुराअकाअरस्स पौललोअस्स, "हा महाणुभाअ! हा माहव! हा मअरन्द! हा साहसिअ! त्ति परिदेवणाओ, किल एदाणं मन्तिधीआण विप्पलम्भवुत्तन्तं सुणिअ, सञ्जाअमच्छराधिक्खेवो, तक्खणविसज्जिदपौढ़पाइकणिवहो चन्द्रादवेण सोहसिहरट्ठिदो पेक्खदित्ति मन्तीअदि। (भ)

---

साहसिक!" इति परिदेवना:, महाराजोऽपि किलैतयोर्मन्त्रिदुहित्रोर्विप्रलम्भवृत्तान्तं श्रुत्वा, सञ्जातमत्सराधिक्षेपस्तत्क्षणविसर्जितप्रौढ़पदातिनिवहश्चन्द्रातपेन सौधशिखरस्थित: प्रेक्षत इति मन्त्र्यते।

---

निवृत्तायां प्रत्यागतायां, मन्दभागिनीति अहमिति शेष:, मालतीवार्त्ताप्रदानाद्यानयनेनैवाव मन्दभागिनीत्वाभिधाने हेतु:। परिदेवना: खेदोक्ती:। विप्रलम्भवृत्तान्तं प्रवञ्चनावार्त्तां, सञ्जातमत्सराधिक्षेप: समुद्भूतविद्वेषतिरस्कार:, तत्क्षणे तद्वार्त्ताकर्णनाक्षणे विसर्जित: मकरन्दोवरोधार्थम्प्रेरित: प्रौढ़: दक्ष: पदातिनिवह: पदातिसैन्यसमूहो येन तथाभूत:। चन्द्रातपेन चन्द्रालोकेन (विरहिलिन सन्तापकतया आतपत्वाभिधानम्) परिशोभित इति शेष:, (तथाप्तानाद्यस्थानावस्थित इति भाव:) प्रेक्षते माधवमकरन्दाभ्यां सह स्वकीयसैन्यानामाहवं अवलोकयति। इति मन्त्र्यते पुरवासिभि: परस्परमाभाष्यते। इति च शेषोनीत्यर्थ:।

---

বিশাল উদ্যাণ্ড দ্বারা নিরতিশয়রূপে ধাবিত হইয়া শত্রু-সৈন্যমধ্যে প্রবিষ্ট হইয়াছেন। মন্দভাগিনী আমিও তৎপরে প্রতিনিবৃত্তা হইয়া আসিলাম, এবং (আসিতে আসিতে "হা মহানুভব মাধব! হা মকরন্দ! হা সাহসিক! ইত্যাদিরূপ গুণানুরাগ কাতরপুরবাসিদিগের বিলাপ শুনিলাম। আরও শুনিলাম "মহারাজও এই মন্ত্রী ও দুহিতার প্রতারণা বৃত্তান্ত শুনিয়া বিদ্বেষ ও তিরস্কারের উদ্ভূতিবশতঃ তৎক্ষণাৎ দক্ষ সৈন্যসমূহ পাঠাইয়া চন্দ্রালোকে বিভূষিত ও প্রাসাদের ছাদের উপরে সংস্থিত হইয়া মাধব ও মকরন্দের সহিত স্বীয় সৈন্যের যুদ্ধ দেখিতেছেন" এই কথা পুরবাসীরা বলিতেছে।

ततः प्रविशति माधवो मकरन्दश्च। (१५)

सकरुणं निश्वस्य।

मक। न यत्र प्रत्याशामनुपतति नो वा रहयति,
प्रविच्छिन्नं चेतः प्रविशति च मोहान्धतमसम्।
अकिञ्चित्कुर्वाणाः पशव इव तस्या वयमहो
विधातुर्वामत्वाद्विपदि परिवर्त्तामह इमे ॥ (१६)

---

वन्निये"त्यादिना। भाविकथांशस्य च निदर्शनात् शुद्धत्वञ्च नध्यनैकपात्रप्रयुज्यत्वादिति मन्तव्यम्।

(१६) न यत्रेति। चेतः अस्माकं मनः (कर्त्तृ) यत्र विपदि प्रत्याशां मालतीप्राप्तिविषयिणीमाशां न अनुपतति न अधिगच्छति, अनेकान्वेषणेनापि तद्वार्त्ताया अप्यनधिगमादिति भावः। नो वा रहयति मालतीप्राप्तिप्रत्याशां न वा परित्यजति, दुरतिक्रमाचोरघण्टाक्रमणादितोऽपि परिक्रमणदर्शनादिति भावः। (परन्तु) प्रविच्छिन्नं मालतीलाभायेनतीव चञ्चलं सत् मोह एव किङ्कर्त्तव्यताविमूढत्वमेव अन्धतमसं गाढतरान्धकारः तत् प्रविशति। किङ्कर्त्तव्यमित्यवधारयितुं न पारयतीत्यर्थः। (अहो इति खेदे) इमे वयं विधातुर्दैवस्य वामत्वात् प्रातिकूल्यात् पशव इव (आहारनिद्रादिरूपसाधारणधर्म्ममात्रशालित्वादिति भावः) तस्या मालत्याः अकिञ्चित्कुर्व्वाणाः विपत्प्रतीकारानुरूपं किञ्चिदप्यकुर्व्वाणा इत्यर्थः, विपदि मालतीसन्धानाप्राप्तिरूपविपत्तौ परिवर्त्तामहे तिष्ठामः। तथाच दैवप्रातिकूल्येनैव मालत्याः किञ्चित् कर्त्तुं वयमसमर्थाः, न तु पुरुषकारविरहादिति भावः।

अत्र चेत इत्येककर्त्तृकारकेण अनुपतत्यादीनामनेकक्रियाणामन्वयाद्दीपकालङ्कारः, पशव इवेत्युपमालङ्कारश्च तनयोः परस्परनैरपेक्ष्येण संसृष्टिः। शिखरिणीवृत्तम्।

---

(১৪) সৌদামিনীর প্রস্থান। (এই অংশের নাম বিষ্কম্ভক)

(১৫) তৎপরে মাধব ও মকরন্দের প্রবেশ।

(১৬) মক। (সকরুণ নিশ্বাস ফেলিয়া) যে বিপদে আমাদের মন মালতীর প্রত্যাশা অবলম্বনও করিতে পারিতেছে না, একেবারে পরিত্যাগও করিতে পারিতেছে না, পরন্তু অত্যন্ত চঞ্চল হইয়া কিংকর্তব্যবিমূঢ়তারূপ গাঢ় অন্ধকারে প্রবিষ্ট হইতেছে। অহো! দৈবপ্রতিকূল্য বশতঃ আমরা পশুর ন্যায় মালতীর কোনই উপকার করিতে না পারিয়া এই বিপদে অবস্থিত আছি।

माध। हा प्रिये मालति! क्वासि, कथमविज्ञाततत्त्वम् अद्भुततमं झटिति पर्य्यवसितासि, ननु अकरुणे! प्रसीद सम्भावय माम्। (१७)

प्रियमाधवे! किमसि मय्यवत्सला
ननु सोऽहमेव यमनन्दयत् पुरा।
अयमुद्गृहीतकमनीयकङ्कण-
स्तव मूर्त्तिमानिव महोत्सवः करः॥ (१८)

वयस्य मकरन्द! दुर्लभः पुनर्जगति तावतः स्नेहस्य सम्भवः। (१९)

---

(१७) माधेति। अविज्ञाततत्त्वम् अनधिगतयाथार्थ्यम् अतएव अद्भुततमम् आश्चर्य्यतमं यथा स्यात्तथा पर्य्यवसितासि विनाशितासि।

(१८) प्रियेति। प्रियः माधवो यस्यास्तथाभूते! मालति! मयि किं किमर्थं अवत्सला स्नेहविरहिता असि। निर्निमित्तं तवेदं स्नेहराहित्यमतीवानुचितमिति भावः। कृतं स्नेहं स्मारयितुमाह—नन्विति। अहं स एव माधवः, पुरा पूर्व्वं मदनोद्यानात् कामन्दकीविहारिकागमनकाले [illegible], उद्गृहीतं सम्यक् धृतं कमनीयं मनोज्ञं कङ्कणं मृणालवलयरूपं येन तथाभूतः, मूर्त्तिमान् धृतविग्रहः महोत्सवः आनन्द इव तवायं करः पाणिः यं समनन्दयत् समतोषयत्। तथाचाधुनापि दर्शनदानेन मम हर्षोत्पादनं तवैव सदा कर्त्तव्यमिति भावः।

अत्र मूर्त्तिमान् महोत्सव इव कर इति वाच्योत्प्रेक्षालङ्कारः। मञ्जुभाषिणी वृत्तम्।

अत्र च करस्य द्वितीयार्द्धनिबद्धत्वात् [illegible]।

(१९) तावत इति तादृशपरिमितस्येत्यर्थः।

---

(১৭) মাধ। হা প্রিয়ে! মালতি! তুমি কোথায়? সহসা কিরূপে অবিজ্ঞাত ও আশ্চর্য্যরূপে বিনাশিত হইলে?

(১৮) অয়ি প্রিয়মাধবে! মালতি! তুমি আমার প্রতি স্নেহশূন্য হইলে কেন? মনোহর কঙ্কণধারী মূর্ত্তিমান মহোৎসবের ন্যায় তোমার এই কর পূর্ব্বে যাহাকে আনন্দিত করিয়াছিল, আমি সেই মাধব।

सरसकुसुमश्यामैरङ्गैरनङ्गमहाज्वरः
चिरमविरतोन्माथी सोढ़ः प्रतिक्षणदारुणः ।
तृणमिव ततः प्राणान्मोक्तुं मनो विधृतं तया,
किमपरमतो निर्व्यूढ़ं यत्करार्पणसाहसम् ॥ (२०)

अपिच । मयि विगलितप्रत्याशत्वाद्विवाहविधेः पुरा,
विकलकरणैर्मर्मच्छेदव्यथाविधुरैरिव ।

---

(२०) स्नेहस्यापरिमितत्वं समर्थयितुमाह—सरसेति । तया मालत्या सरसानि समधूनि अभिनवानीति यावत्, यानि कुसुमानि पुष्पाणि तद्वत्श्यामैः सुकुमारैः अङ्गैः शरीरैः अविरतोन्माथी अनवरतोन्मथनकारी प्रतिक्षणदारुणः सर्व्वदातिभीषणः न तु साधारणज्वरवत् सविराम इत्यर्थः, अनङ्गमहाज्वरः कामजमहासन्तापः चिरं बहुकालं सोढ़ः मत्प्राप्तिप्रत्याशया सह्यः कृतः । ततः तदनन्तरं नन्दनेन सह विवाहोद्योगे सति मत्प्राप्तिप्रत्याशाविगमानन्तरमित्यर्थः, प्राणान् तृणमिव मोक्तुं परित्यक्तुं मनश्चित्तं विधृतं नियोजितम् । मरणं निश्चितमित्यर्थः । ततश्च यत्करार्पणसाहसं आत्मनैव पाणिदानसाहसं निर्व्यूढ़ं कुलकुमार्य्या तया पित्राद्यनपेक्षया निर्व्वाहितं, अतः अपरं इतोधिकं किं स्नेहनिदर्शनं कथ्यतामिति शेषः । अपरिमितस्नेहं विना पूर्व्वोक्तमेकमपि कुलकुमार्य्या सम्पादयितुं न शक्यते इति सर्व्वथैव जगति तादृशस्नेहस्य सम्भवो दुर्लभ इति भावः ।

अत्र प्रथमपादे लुप्तोपमा, तृतीयपादे च श्रौतोपमालङ्कारः इत्यनयोः परस्परनैरपेक्ष्येण सङ्करः । हरिणीवृत्तम् ।

(२१) मयीति । हे सखे ! मकरन्द ! असौ मालती विवाहविधेः पुरा मया सह गान्धर्व-

---

(১৯) বয়স্য মকরন্দ। তাদৃশ অপরিমিত স্নেহের সম্ভব জগতে পুনরায় দুর্লভ।

(২০) অভিনব কুসুমের ন্যায় সুকুমার-অঙ্গবিশিষ্টা এই মালতী (আমার প্রাপ্তি প্রত্যাশায়) অবিরত উন্মথনকারী ও সর্ব্বদা অত্যন্ত ভীষণ কামজ্বর বহুকাল সহ্য করিয়াছিল। তৎপরে আমার প্রাপ্তি প্রত্যাশা তিরোহিত হইলে তৃণের ন্যায় প্রাণ পরিত্যাগ করিতে সঙ্কল্প করিয়াছিল। তৎপরে যে স্বয়ংই প্রাণিদানরূপ সাহস নির্ব্বাহিত করিয়াছে, ইহা হইতে অধিক স্নেহের নিদর্শন কি

अरसि रुदितैः स्नेहाकूतं तथा व्यतनोदसा-
वहमपि यथाभूवं पीड़ातरङ्गितमानसः ॥ (२१)

[ सावेगम् । ] अहो नु खलु भोः ! (२२)

दलति हृदयं गाढ़ोद्वेगं द्विधा तु न भिद्यते,
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्,
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ (२३)

---

विवाहानुष्ठानात् प्राक् मयि विगलितमन्दाक्षत्वात् नन्दनेन सह विवाहावधारणेन तदवाप्तौ हताशत्वात् मर्मच्छेददया हृदयद्विधाकरणपीड़या विधुरैः दुःखितैरिव विकलैः स्वस्वविषयग्रहणविमुखैः करणैः इन्द्रियैः उपलक्षिता सती रुदितैः रोदनैः तथा तत्प्रकारं निरतिशयमित्यर्थः, स्नेहाकूतं मद्विषयकानुरागाभिप्रायं व्यतनोत् विस्तारितवती, यथा येन स्नेहाकूतेन अहमपि पीड़या तदीयव्यथानुभवजनितक्लेशेन तरङ्गितं चञ्चलं मानसं चित्तं यस्य, तथाभूतः अभूवम् इति त्वं स्मरसि किमित्यर्थः। तदा च जगति तादृशस्नेहस्य सम्भवः कुत्रापि एवम्भूतः नास्ति यत्कथमिति भावः।

अत्र द्वितीयचरणे वाच्योत्प्रेक्षालङ्कारः। हरिणीवृत्तम्।

(२२) सावेगमिति, तत्तत्कारणजनितामितशोकावेगेन सहितं यथा स्यात्तथेत्यर्थः। "अहो नु खलु भो" इत्येकमेवातिविषादसूचकमव्ययम्।

(२३) दलतीति। गाढ़: दृढ़: उद्वेगः मालतीविरहजनितक्लेशः यस्य तथाभूतं हृदयं दलति विच्छिन्नं भवति, तु किन्तु द्विधा न भिद्यते द्विधाविभक्तं न भवति, तदानीं दुःखावसानसम्भवादिति भावः। विकलः विरहविह्वलः कायः शरीरं मोहं मूर्च्छां वहति लभते, किन्तु चेतना चैतन्यं न मुञ्चति चिराय न जहाति। तथात्वेऽपि पुनर्दुःखानुभवासम्भवादिति भावः। अन्तर्दाहः विरहजनिताभ्यन्तरीणसन्तापः तनुं देहं ज्वलयति सन्तापयति, किन्तु

---

(২১) হে সখে! আরও বলি, আমার সহিত গান্ধর্ব্ববিবাহ নিষ্পন্ন হইবার পূর্ব্বে (নন্দনের সহিত বিবাহাবধারণে) আমার প্রাপ্তিপ্রত্যাশার বিগমবশতঃ মর্ম্মচ্ছেদ পীড়ায় দুঃখিত হইয়াই যেন স্ব স্ব বিষয় গ্রহণে বিমুখ ইন্দ্রিয়বিশিষ্টা এই মালতী রোদনদ্বারা সেইরূপ স্নেহাভিপ্রায় বিস্তার করিয়াছিল। যদ্দ্বারা আমিও তদীয় ব্যথানুভবপীড়ায় চঞ্চলমনা হইয়াছিলাম, ইহা তোমার স্মরণ হয় কি?

(২৩) গাঢ় উদ্বেগশালী আমার হৃদয় বিচ্ছিন্ন হইতেছে, কিন্তু দুইভাগে বিভক্ত হইতেছে না। বিরহবিহ্বল শরীর মূর্চ্ছা লাভ করিতেছে, কিন্তু একেবারে

मक। वयस्य माधव! निरवग्रहं दहति दैवमिव दारुणो विवस्वान्, इयञ्चाति शरीरावस्था, तत् अस्य पद्मसरसः परिसरे मुहूर्त्तमास्यताम्। अत्र हि—(२४)

उन्नालबालकमलाकरमाकरन्द-
निष्यन्दसंवलितमांसलगन्धबन्धुः।

---

भस्मसात् भस्मीभूतां न करोति, तथात्वेऽपि दाह्याभावेन शोकाग्नेर्निर्व्वाणसम्भवादिति भावः। तथा मर्म्मच्छेदी हृदयविदारणकारी विधिः दैवं प्रहरति प्रहारं करोति, किन्तु जीवितं जीवनं न कृन्तति न विनाशयति, तथात्वेऽपि दुःखोपशमसम्भवादिति भावः। तथाच मरणं विना विरहदुःखनिवारणोपायो नास्ति, तन्मरणमपि मे न सम्पद्यत इत्याशयः।

अत्र विच्छिन्नत्वमोहप्राप्तिदेहज्वलनप्रहाररूपकारणानां सत्त्वेऽपि द्विधाविभक्तत्वचैतन्यपरित्यागभस्मीभूतत्वविनाशरूपकार्य्याणामभावात् चत्वारो विशेषोक्त्यलङ्कारास्तेषाञ्च मिथो नैरपेक्ष्येण संसृष्टिः। हरिणीवृत्तम्।

"मनस्येष्टाप्त्युत्पन्नः श्रमः खेद इति स्मृत"इति दर्पणलक्षणादत्र खेदोनाम विमर्षसन्ध्यङ्गम्।

अयञ्च श्लोकः "गाढोद्वेगं द्विधा तु मे"त्यत्र "गाढोद्वेगो द्विधान त्वि"त्येतावन्मात्रेण परिवर्त्तित उत्तररामचरितेऽपि दृश्यत इत्यनुसन्धेयम्।

(२४) मकेति। दैवं पूर्व्वकर्म्मार्ज्जितदुरदृष्टमिव. दारुणः प्रचण्डकिरणत्वात्तीक्ष्णः विवस्वान् माध्याह्निकः सूर्य्यः निरवग्रहं निष्प्रतिबन्धं यथा स्यात्तथा दहति त्वां सन्तापयति। इयं नितान्तं क्लान्तिसमाक्रान्ता। पद्मसरसः पद्मप्रचुरसरोवरस्य परिसरे तीरे मुहूर्त्तं कियत्समयं व्याप्य आस्यतां उपविश्यताम्! अत्र दैवमिवेति पूर्णोपमालङ्कारः, लिङ्गभेदोऽप्येतादृशस्थले धीमतामुद्वेगाभावान्नोपमादोषः "यत्रोद्वेगो न धीमता"मिति दण्डिवचनात्।

---

চৈতন্য পরিত্যাগ করিতে পারিতেছে না। বিরহজনিত তাপজাত শোকাগ্নি শরীর সন্তাপিত করিতেছে, কিন্তু একেবারে ভস্মীভূত করিতেছে না। এবং হৃদয় বিদারণকারী বিধি প্রহার করিতেছে, কিন্তু একেবারে বিনাশিত করিতেছে না।

(২৪) মক। বয়স্য মাধব! দৈবের ন্যায় দারুণ সূর্য্য ও অপ্রতিহতভাবে (তোমাকে) সন্তপ্ত করিতেছে। তোমার শরীরেরও ক্লান্তিযুক্ত, অতএব এই পদ্মসরোবরের তীরে কিয়ৎকাল উপবেশন কর, এইখানে—

त्वां प्रीणयिष्यति पुरःपरिवर्त्तमान-
कल्लोलशीकरतुषारजड़ः समीरः ॥ (२५)

इति परिक्रम्योपविशतः । (२६)

मक । [ स्वगतम् । ] भवतु, एवं तावत् अन्यतः प्रक्षिपामि
[ प्रकाशम् । ] वयस्य माधव ! । (२७)

---

(२५) उपवेशनप्रयोजनमाह—उन्नालेति। उद्गतानि रविकिरणशोषणाल्पजलतया समुत्थितानि नालानि येषां तथाभूता ये नालकमलाकराः अचिरविकचपद्मसमूहाः ( आकरो निकृष्टोत्पत्तिस्थानश्रेष्ठे तु कथ्यत इति मेदिनीकारः ) तेषां मकरन्दनिष्यन्देन मकरन्दसम्बन्धि-चरणेन रसक्षरणेनेति यावत्, संवलितः विनिन्दितः यो मांसलगन्धः परिपुष्टसौरभं तेन वन्धुः मिलन्, तथा पुरः अग्रे परिवर्त्तमानाः दोदुल्यमानाः ये कल्लोलाः विशालसरोवरजलतरङ्गाः तेषां शीकरैः जलैः तुषारवत् हिमवत् जड़ः शीतलः ( सुषीमः शिशिरो जड़ः ! तुषारः शीतो हिमः समान्यलिङ्गका इत्यमरः ) समीरः पवनः त्वां प्रीणयिष्यति क्लान्तिनिवारणेन प्रीतं करिष्यति।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासौ शब्दालङ्कारौ, तथा साभिप्रायस्य वन्धुत्वस्य प्रकृतप्रीत-करणोपयोगित्वात् परिकरालङ्कारः, तुषारजड़शब्दयोरापाततार्थ शीतलार्थतया पौनरुक्त्य-प्रतिभासनात् पर्यवसाने तु तुषारवत् हिमवत् जड़ः शीतल इत्यन्यार्थत्वाच्च पुनरुक्तवदाभासा-लङ्कार । इत्यनयोरङ्गाङ्गिभावेन सङ्कर इति संसृष्टिः। परिकरपुनरुक्तवदाभासयोर्लक्षणं दर्पणोक्तं यथा—

"विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः ।
परिकरी भवेत्तत्स्यात्तुल्याधिकरणो द्विधा ॥"
आपाततो यदर्थस्य पौनरुक्त्यावभासनम् ।
पुनरुक्तवदाभासः स भिन्नाकारशब्दगः ॥" इति ।

वसन्ततिलकावृत्तम् ।

(२८) मकेति । एवं अनेन प्रकारेण वदनारविन्दमित्यादिनेति यावत्, अन्यतः

---

(२९) ... ... ... ... ... ... ...

हा प्रिये मालति ! ।

तरुणतमालनीलबहुलोन्नमदम्बुधराः,
शिशिरसमीरणावधूतनूतनवारिकणाः ।
कथमवलोकयेयमधुना हरिहेतिमती-
र्मदकलनीलकण्ठकलहैर्मुखराः ककुभः ॥ (३५)

शोकार्त्तिं नाटयति । (३६)

मक । कोऽप्यतिदारुणो दशाविपाकः सम्प्रति वयस्यस्य । [ सास्रम् । ] मया पुनर्वज्रमयेन कोऽपि विनोद आरब्धः ।

---

(३५) तरुणतमालवत् प्रौढ़तापिञ्छवृक्षवत् नीलाः श्यामवर्णाः बहुलाः बहवः उन्नमन्तः उद‍्गच्छन्तश्च अम्बुधराः मेघाः यासु तथोक्ताः, शिशिरसमीरणैः शीतलपवनैः अवधूताः कम्पिताः नूतनवारिकणाः प्रत्यग्रशीकराः यासु तथोक्ताः, हरिहेतिमतीः इन्द्रचापवतीः यथा मदकल-नीलकण्ठानां मदमत्तमयूराणां कलहैः कलकलैः ( कलहं कलकलेऽपि वेति विश्वः ) मुखराः शब्दायमानाः ककुभः दिशः अधुना अस्मिन् मालतीविरहोपभोगकाले कथं केन प्रकारेण अवलोकयेयम् पश्येयम् । समतीवोद्दीपकतया कथमपि द्रष्टुं न शक्नुयामिति भावः ।

अत्रापि चापरूपविशेषे अभिधातव्ये हेतीति समालङ्कारः । नर्द्दटकं नाम वृत्तम् । "यदि भवतो न जौ भजजलागुरुनर्द्दटक"मिति तल्लक्षणम् ।

एवं "कदम्बनीपकुटजैः शाद्वलैः सेन्द्रगोपकैः । मेघवातैः सुखस्पर्शैः प्रावृट्कालं प्रदर्शये"दिति विधानानुसारेण वर्षाकालवर्णनादिष्टं नाम नाट्यलक्षणम् । तथाचोक्तं—देशकालस्वरूपेण वर्णनादिष्टमुच्यत" इति ।

(३६) शोकार्त्तिं चित्तवैधुर्य्यजनितां पीड़ां नाटयति शरीरकम्पादिनाभिनयति ।

---

বর্ষা-সমাগমের সম্পর্কজনিত শোভাধারণকারী সেই সকল দিবস (অর্থাৎ প্রিয়তমাপত্নীর সহিত বিচরণ করিবার জন্য মনোরাজ্যে সন্নিবেশিত দিবসসকল ) এই প্রিয়াবিরহকালে পরিণত হইতেছে ।

(৩৫) হা প্রিয়ে মালতি ! যাহাতে তরুণ তমালবৃক্ষের ন্যায় নীলবর্ণ বহুমেঘ উদ্‌গত হইতেছে ও শীতল সমীরণ নূতন জলকণাবিকম্পিত হইতেছে চাপযুক্ত এবং ময়ূরকোলাহলে মুখরতি তাদৃশ দিক্‌সকল সম্প্রতি আমি কিরূপে অবলোকন করিব ?

(৩৬) ( শোকজনিত পীড়ার অভিনয় )

पयोनिधिशरच्चन्द्र ! हा कामन्दकीमकरन्दानन्दनमुखचन्द्र ! माधव ! अयमत्र ते जन्मनि अपश्चिमः पश्चिमावस्थां प्रापितो मकरन्दबाहुपरिष्वङ्गः। स एष मकरन्दो मुहूर्त्तमपि जीवतीति मैवं मंस्थाः। (८१)

आजन्मनः सहनिवासतया मयैव
मातुः पयोधरपयोऽपि समं निपीय।
त्वं पुण्डरीकमुख ! बन्धुतया निरस्त-
मेको निवापसलिलं पिबसीत्ययुक्तम् ॥ (८२)

---

जीवितेश्वरः प्राणनाथः तत्सम्बोधनम्। सौन्दर्य्येण विनिर्जिता पराभूता रतिरमणस्य कामदेवस्य काया छवियेन तथाभूत ! कामिनीहृदयानां मन्मथ ! कन्दर्पस्वरूप ! तद्वदुन्मादकरेति यावत्। बान्धवाः पित्रादयः एव पयोनिधयः सागरास्तेषां शरच्चन्द्र ! तद्वदाह्लादजनकत्वात् शरच्चन्द्रस्वरूप ! कामन्दकीमकरन्दयोः आनन्दन. आनन्दजनकः मुखचन्द्रः वदनेन्दुर्यस्य तथाभूत, अत्र जन्मनि अयं मया दीयमानः अपश्चिमः इतःपरमपि दातुमभिलषणीयत्वादचरमोऽपि मकरन्दस्य मम बाहुपरिष्वङ्गः आलिङ्गनं पश्चिमतां चरमतां प्रापितः नीतः दैवहतकेनेति शेषः। जीवतीति त्वां विनेत्यादिः। मैवं मंस्थाः एवं मनसि न कुर्य्याः। त्वद्विरहितं ममापि जीवनं न क्षणमपि स्थास्यतीति भावः।

(८२) आजन्मन इति। हे पुण्डरीकमुख ! श्वेतोत्पलवन्मनोरमास्य ! आजन्मनः जन्मन आरभ्य सहनिवासितया एकत्रावस्थानेन हेतुना मयैव समं सार्द्धं मातुः पयोधरपयोऽपि जननीस्तनदुग्धमपि निपीय पीत्वा त्वं एकः एकाकी बन्धुतया पित्रादिबान्धवसमूहेन निरस्तं निक्षिप्तं प्रदत्तमिति यावत्, निवापसलिलं तर्पणजलं (पितृदानं निवापः स्यादित्यमरः) पिबसि

---

আশ্রয় ! হে (দয়াদাক্ষিণ্যাদি গুণ দ্বারা) লোকের শিক্ষক ! হে স্বয়ংগ্রহণে মালতীর জীবিতেশ্বর ! হে (সৌন্দর্য্যে) কামদেব-সৌন্দর্য্যবিজয়কারিন্ ! হে কামিনীহৃদয়কন্দর্প ! হা বান্ধবসমুদ্রশরচ্চন্দ্র ! হা কামন্দকীনয়নানন্দন মুখচন্দ্র ! মাধব ! (চিরাভিলষণীয় বলিয়া) তোমার এজন্মে যাহার শেষ হইত না, তাদৃশ মকরন্দের (আমার) এই ভুজালিঙ্গন দৈব কর্ত্তৃক চরমতা প্রাপিত হইল। সে এই মকরন্দ মুহূর্ত্তকালও জীবিত থাকিবে, এরূপ মনে করিও না।

(৮২) হে পুণ্ডরীকমুখ ! জন্মাবধি আমারই সহিত একত্রাবস্থান বশতঃ

[ सकरुणं विमुच्य परिक्रम्य च। ] इयमधस्तात् पाटलावती, भगवति आपगे ? (८३)

प्रियस्य सुहृदो यत्र मम तत्रैव सम्भवः। भूयादमुत्र भूयोऽपि भूयासमनुसञ्चरः। (८४)

इति पतितुमिच्छति।

प्रविश्य सहसा सौदामिनी। [ वारयित्वा। ] वत्स ! अलं साहसेन। (८५)

---

मालति ( मविच्छिन्नदृशाखीन्दौ वर्द्धमाना ) इति एतत् वस्तुद्वयं अनुचितम्। तत्प्राप्त्यापि मया तदैव हर्त्तव्यत्वादिति भावः। तदाव मयापि तेन तेनापि प्रकारेण मरणमङ्गीकृत्य चिरात्तत्-सहचरेण भवितव्यमिति ध्वनिः। वसन्ततिलकावृत्तम्।

(८३) इयमधस्तादिति। विमुच्य कौशेयं माधवदेहं त्यक्त्वा, परिक्रम्य गमनयोग्यपर्वतारोहणाय पादविक्षेपं कृत्वा। पर्वतनिम्नभागे पाटलावतीं सम्बोधयति—भगवतीति। आपगा नदी, तीर्थत्वात् ऐश्वर्य्यशालित्वं बोध्यम्।

(८४) प्रियस्येति। यत्र स्थाने प्रियस्य सुहृदः प्रियतमस्यमाधवस्य सम्भवः जन्म भवेदिति शेषः, तत्रैव स्थाने ममापि सम्भवः जन्म भूयात्। तथा भूयोऽपि पुनरपि अमुत्र परलोके अनुसञ्चरः सह गामिनस्तस्य अनुचरः भूयासम् ( प्रार्थनायामाशीर्लिङ् ) तथा चैतद्द्वयं तस्मिन्नेव मम प्रार्थनीयमिति भावः।

अनुष्टुप् छन्दः "भूयाद्" इति इत्यादयस्त्रयः पदार्थाः ... एवं ... । इत्यादयुदाहरणानि।

---

মা তুমি হৃদয়েও একত্রে পান করিয়া তুমি একাকী বসুন্ধরাতে ... পান করিবে ইহা অনুচিত।

(৮৩) (সকরুণে মাধবের শরীর পরিত্যাগ করিয়া ও পর্বতাগ্র আরোহণার্থ পাদবিক্ষেপ করিয়া) এই অধোভাগে পাটলাবতী নদী। ভগবতি আপগে!

(৮৪) যে স্থানে প্রিয়সুহৃদ মাধবের জন্ম হইবে, আমারও যেন সেই স্থানেই জন্ম হয়। এবং পুনরায়ও যেন পরলোকে উহার অনুচর হইতে পারি। ( এই বলিয়া পতনে উন্মুখ হইল )।

मक। [ विलोक्य। ] अम्ब! कासि? किमहं त्वया प्रतिषिद्धः? (८६)

सौदा। आयुष्मन्! किं त्वं मकरन्दः? (८७)

मक। मुञ्च, स एवास्मि मन्दभाग्यः। (८८)

सौदा। वत्स! योगिनी अस्मि, मालत्या अभिज्ञानञ्च धारयामीति। वकुलमालां दर्शयति। (८९)

मक। [ सोच्छ्वासं सकरुणम्। ] आर्य्ये! अपि जीवति मालती? (९०)

---

(८५) प्रविश्येति। सौदामिनी सहसा द्रुतं प्रविश्य मकरन्दान्तिके समुपस्थाय, वारयित्वा पतनान्निवर्त्त्य आहेत्यर्थः। साहसेन आत्महत्यासाधकेन पर्व्वतशिखरान्नदीपतनरूपसाहसिककर्म्मणा, अलं व्यर्थं।

(८६) मकेति। किं किमर्थं? प्रतिषिद्धः मरणाध्यवसायान्निवारितः।

(८७) मालतीसकाशात् श्रुतं मकरन्दं सम्भाव्य पृच्छति—आयुष्मन्निति।

(८८) तत्कालाभिलषितमरणप्रतिबन्धाद्विरक्त्या कथयति—मुञ्चेति। स एव मकरन्द एव।

(८९) योगिनीति काचिदित्यादि। अभिज्ञानं निदर्शनचिह्नम्।

(९०) सोच्छ्वासमिति, उच्छ्वासेन औत्सुक्येन सहितं यथा स्यात्तथेत्यर्थः। अपि प्रश्ने।

---

(৮৫) সৌদামিনী (সহসা প্রবেশ করিয়া ও নিপতন হইতে মকরন্দকে নিবৃত্ত করিয়া) বৎস! এই মরণসাধক সাহসিক কর্ম্মে কোনও ফল নাই।

(৮৬) মক। মাতঃ! তুমি কে? আমাকেই বা নিবারিত করিতেছ কেন?

(৮৭) সৌদা। আয়ুষ্মন্! তুমি কি মকরন্দ?

(৮৮) মক। পরিত্যাগ কর, আমি সেই মন্দভাগ্যই বটি।

(৮৯) সৌদা। বৎস! আমি যোগিনী, মালতীর চিহ্নও ধারণ করিতেছি। (বকুলমালা দেখাইল)

(৯০) মক (ঔৎসুক্য ও শোকের সহিত) আর্য্যে! মালতী কি জীবিত আছে?

सौदा। अथ किम्। वत्स! किमत्याहितं माधवस्य यदनिष्टे व्यवसितोऽसि इति आकम्पितास्मि। अथ माधवः क्व?। (९१)

मक। आर्य्ये! तमहं प्रमुग्धमेव वैराग्यात् परित्यज्य आगतः, तदेहि, तूर्णं सम्भावयावः। [त्वरितं परिक्रामतः।] (९२)

माध। [आश्वस्य।] अये! प्रतिबोधितः एवास्मि केनापि नून-मस्य अभिनवजीमूतजलवाहिनः प्रभञ्जनस्य अनपेक्षितास्मदवस्थोऽयं व्यापारः। (९३)

---

(९१) अथ किमित्यनुमतवादः मालतीजीवने वैचक्षण्यं। अत्याहितं निरतिशयानिष्टं। कुत इदं पृच्छसीत्याकाङ्क्षायामाह—यदिति, यद्यस्मात् अनिष्टे पर्वतात् पतनरूपे आत्महत्या-साधककर्मणि, प्रवृत्तः उद्यतः।

(९२) मकेति। प्रमुग्धं अचेतनं। वैराग्यात् तज्जीवनप्रत्याशाविरहेण स्वजीवनं प्रत्यपि वैतृष्ण्यात्। सम्भावयावः अनेन मालतीसन्निधानेन रक्षितुं यतिष्यावहे। त्वरितं सत्वरं यथा स्यात्तथा परिक्रामतः सौदामिनीमकरन्दौ माधवसमीपगमनाय पादविक्षेपं कुरुतः।

(९३) आश्वस्येति चैतन्यं लब्ध्वेत्यर्थः। केनापि अपरिज्ञातजनेन। विशिष्याव-धारयति—नूनमित्यादिना। नूनं निश्चितं अभिनवजीमूतजलवाहिनः नूतनजलधरसलिल-कणाकर्षिणः प्रभञ्जनस्य पवनस्य। अनपेक्षिता अनभिमता अस्मदवस्था मालतीविरहे पञ्चानल-मरणीयदुर्दशा यस्मिन् तादृशः अयं मत्प्रतिबोधनरूपः व्यापारः कार्य्यं। तदात्वेवं मदीय-दुरवस्थाधिकमे सति पवनो नैतादृशदुःखानुभवकरं मदीयमूर्च्छाभङ्गमकरोदिति भावः। एतेन मालतीविरहे पञ्जनितदुःखानुभवाद्वरमेव मरणमिति ध्वनिः।

---

(৯১) [illegible]

(৯২) [illegible]

(৯৩) [illegible]

মক। দিষ্ট্যা পুনঃ প্রত্যাপন্নচেতনো বয়স্যঃ। (৯৪)

সৌদা। [বিলোক্য।] সংবদতি উভয়োর্মালতীনিবেদিতঃ শরীরাকারঃ। (৯৫)

মাধ। ভগবন্ পৌরস্ত্যপবন! (৯৬)

ভ্রময় জলদানম্ভোগর্ভান্ প্রমোদয় চাতকান্
কলয় শিখিনঃ কেকোৎকণ্ঠান্ কঠোরয় কেতকান্।
বিরহিণি জনে মূর্চ্ছাং লব্ধ্বা বিনোদয়তি ব্যথাম্
অকরুণ! পুনঃ সংজ্ঞাব্যাধিং বিধায় কিমীহসে?॥ (৯৭)

---

(৯৪) দিষ্ট্যা ভাগ্যেন, প্রত্যাপন্না লব্ধা চেতনা চৈতন্যং যেন তাদৃশঃ।

(৯৫) বিলোক্যেতি মাধবমকরন্দয়োঃ শরীরং বিশেষতো নিরীক্ষ্যেত্যর্থঃ। উভয়োঃ মাধব-মকরন্দয়োঃ মালতীনিবেদিতঃ পরিজ্ঞানার্থং মালত্যা কথিতঃ শরীরাকারঃ দেহাকৃতিঃ সংবদতি দৃশ্যমানৈতদ্দেহয়োঃ সংঘটতে। তথাচেমাবেব মাধবমকরন্দাবিত্যত্র নাস্তি সন্দেহ ইতি ভাবঃ। স্বগতোক্তিরিয়ং!

(৯৬) পৌরস্ত্যপবন! পূর্ব্বদিগ্ভবসমীরণ!

(৯৭) ভ্রময়েতি। অম্ভোগর্ভান্ সলিলাভ্যন্তরান্ জলদান্ মেঘান্ ভ্রময় জগতামুপকারায় বর্ষণার্থং চতুর্দ্দিক্ষু পরিচালয়। চাতকান্ চাতকাখ্যপক্ষিণঃ প্রমোদয় সলিলপ্রদানেন সন্তোষয়। শিখিনঃ ময়ূরান্ কেকায়াং স্বকীয়শব্দে উৎকণ্ঠা উৎসুকতা যেষাং তথাভূতান্ কলয় গর্জ্জনেন বিধেহি। তথা কেতকান্ কেতকীতরূন্ কঠোরয় জলসেকেন প্রৌঢ়ান্ কুরু। এভিস্তব ব্যাপারঃ কস্যাপি ক্ষতিবিরহাদাপত্তির্নাস্তীতি ভাবঃ। পুনঃ কিন্তু হে অকরুণ! দয়াবিরহিত!

---

আমার এই বিরহাবস্থার অবগতি না থাকায় নূতন মেঘের জলবহনকারী পবনেরই (আমার চৈতন্য সম্পাদনরূপ) এই কার্য্য।

(৯৪) মক। ভাগ্যবশতঃই বয়স্য পুনরায় চৈতন্যলাভ করিয়াছে।

(৯৫) সৌদা। (অবলোকন করিয়া) মাধব ও মকরন্দের শরীরাকৃতি মালতী যেরূপ বলিয়াছিল, সেরূপ অবিকলই দেখা যাইতেছে।

(৯৬) মাধ। ভগবন্ পূর্ব্বদিক্প্রভব বায়ো!

(৯৭) সলিলগর্ভ মেঘসমূহকে চতুর্দ্দিকে পরিচালিত কর। চাতক পক্ষিগণকে (জলদান করিয়া) সন্তুষ্ট কর। ময়ূরগণকে (গর্জ্জন দ্বারা)

मक। सुविहितमनेनाखिलजन्तुजीवनेन मातरिश्वना। (८८)

---

मूर्च्छां चैतन्याभावं लब्ध्वा स्वयं विरहदुःखं विनोदयति निराकुर्वाणे विरहिणि जने (माहशे) संज्वरं चैतन्यमेव व्याधिः रोगः तं विधाय सन्तापं किं ईहसे प्राप्तुं चेष्टसे ? तथा चैतेन परदुःखप्रदानमात्रस्यैव साधना दैवतस्य तवातीवानुचितमिति भावः।

अत्र भगवन्निति सम्बोधनेन पवनस्य गौरवमुररीकृत्य शोकावेगेन पुनरकरुणेति सम्बोधन-प्रभृतिभिस्तस्य व्यतिक्रमप्रदर्शनाद्द्रवो नाम विमर्शसन्धेरङ्गम्। यथोक्तं दर्पणे "द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसम्भवे"ति।

एवमप्रस्तुताद्विरहिजनसामान्याद्विशेषस्य माधवस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, स च संज्वर-व्याधिरिति केवलनिरङ्गरूपकेण सङ्कीर्यते। तथा "अर्थान् विद्वान् यदनुक्त्वा विशेषोक्तिर्विशेषण"-मिति विशेषणं नाम नाट्यालङ्कारश्च। हरिणीवृत्तम्।

(८८) मकेति। अखिलानां सर्वेषां जन्तूनां प्राणिनां जीवनेन प्राणभूतेन अनेन मातरिश्वना पवनेन सुविहितं माधवचैतन्यसम्पादनरूपं सुष्ठु कर्म कृतम्। अन्यथा जगदन्ध-कारमयं स्यादिति भावः।

क्वचित् पुस्तके मातरिश्वनेत्यनन्तरं
"अपिच—

एते केतकधूलिगौरमधुराः पौरप्रगल्भाङ्गना
व्यालोलालकवल्लरीविलुठनव्याजोपभुक्ताननाः
खिन्नोन्निद्रकदम्बकुट्मलपुटीधूलीलुठत्षट्पद-
व्यूहव्याहृतिहारिणो विरहिणः कर्षन्ति वर्षानिलाः॥

इत्यधिकः पाठः दृश्यते। तदर्थश्च—केतकधूलिगौरमधुराः केतककुसुमपरिमलशालिनः, तथा पौराः पुरवासिन्यः याः प्रगल्भाङ्गनाः प्रागल्भ्यशालिन्यो रमण्यः तासां याः व्यालोलाः चञ्चलाः अलकवल्लर्यः चूर्णकुन्तललताः तासां विलुठनव्याजेन परिचालनच्छलेन उपभुक्तानि उपभोगविषयीकृतानि आननानि प्रगल्भाङ्गनानां मुखानि यैस्तथाभूताः, किञ्च उन्निद्रकदम्बपुटीधूलीषु विकचनीप-कुसुमकोषरजःसु लुठतः लग्नस्य षट्पदसमूहस्य भ्रमरवृन्दस्य व्याहृतिं झङ्कारं हर्तुं शीलं येषां तथाभूताः वर्षानिलाः पर्जन्यवाताः विरहिणः विरहदुःखकातरान् जनान् कर्षन्ति।

---

কেকারবে বিরহী উৎকণ্ঠিত হয় এবং কেতকীগন্ধে অনেকের প্রাণ নষ্ট হয়। কিন্তু হে নির্দয়! মূর্চ্ছাগত হইয়া বিরহব্যথার কথঞ্চিৎ হ্রাস-কারী বিরহিজনের চৈতন্যসম্পাদনরূপ ব্যাধি বিধান করিয়া কি লাভ করিতে চেষ্টা করিতেছ ?

माध। देव वायो! तथापि भवन्तमेवं प्रार्थये। (९९)

विकसत्कदम्बनिकुरम्बपांशुना
सह जीवितं वह मम प्रिया यतः।
अथवा तदङ्गपरिवासशीतलं
मयि किञ्चिदर्पय भवान् हि मे गतिः॥ (१००)

कृताञ्जलिः प्रणमति। (१)

---

अत्र प्रथमार्द्धे प्रस्तुते वर्षानिले अप्रस्तुतकामुकव्यवहारसमारोपात् समासोक्तिरलङ्कारः। शार्द्दूलविक्रीड़ितं वृत्तम्।

(९९) माधेति। तथापि संज्ञाव्याधिविधायित्वेन ममानिष्टकारित्वेऽपि। एवं वक्ष्यमाणम्।

(१००) विकसदिति। प्रिया मालती यतः यस्मिन् प्रदेशे विद्यते तं देशमित्यर्थः, विकसतां प्रस्फुटतां कदम्बानां नीपकुसुमानां निकुरम्बस्य समूहस्य पांशुना :परागेण सह मम जीवितं जीवनं वह प्रापय। तत्काले कदम्बकुसुमानामाधिक्येन विकाशात्तद्वहनस्य च वायोः सम्भवपरत्वादाशासन्यूनतासूचनाय सहोक्तिरिति मन्तव्यम्। पक्षान्तरमाह—अथवेति। अथवा तदङ्गेषु तस्या मालत्याः शरीरेषु परिवासेन समन्तादवस्थानेन शीतलं किञ्चित् यत् किमपि वस्तु मयि अर्पय। तेनापि मम कथञ्चित्शान्तिसम्भवेन महानुपकारः साधितो भवेदिति भावः। अथ तदपि कथं करोमीत्यत आह—भवानित्यादि। हि यस्मात् भवान् मे मम गतिः शरणं आश्रयः। तथाचाश्रितोपकारसाधनं महतस्तवावश्यमेव कर्त्तव्यमित्याशयः। मञ्जुभाषिणी वृत्तम्।

(१) प्रणमतीति वायुमित्यादि।

---

(৯৮) মক। নিখিল প্রাণীর প্রাণভূত এই বায়ু মানবের চৈতন্য সম্পাদন-রূপ উচিত কার্য্যই করিয়াছে।

(৯৯) মাধ। দেব পবন! তথাপি আপনাকে এই প্রার্থনা করিতেছি।

(১০০) যেই দেশে প্রিয়া মালতী অবস্থান করিতেছে, কদম্বকুসুমসমূহের পরাগ সহিত আমার জীবনকেও সেই দেশ পাওয়াও। অথবা সেই মালতীর শরীরাবস্থানে শীতল যে কোন বস্তু আমাকে অর্পণ কর। যেহেতু তুমিই সম্প্রতি আমার আশ্রয়।

(১) (কৃতাঞ্জলিপুটে বায়ুকে নমস্কার করিতে লাগিল)

सौदा। सुसमाहितः खलु अभिज्ञानदर्शनस्य अवसरः
अञ्जलौ मालां मुञ्चति। (२)

माध। [ साकूतविस्मयहर्षम्। ] कथमियमस्मद्विरचिता प्रियायाः
स्तनोद्भेददुर्ललितमूर्त्तिः　अनङ्गमन्दिराङ्गणबकुलप्रसवमाला।
[ निरूप्य, सहर्षम्। ] कः सन्देहः। तथाहि स एवायमस्याः—(३)

मुग्धेन्दुसुन्दरतदीयमुखावलोक-
हेलाविसृङ्खलकुतूहलनिह्नवाय।

---

(२) सौदेति। अभिज्ञानप्रदर्शनस्य बकुलमालारूपमालतीचिह्नप्रदर्शनस्य, सुसमाहितः समुचितः अवसरः अयं समयः। अञ्जलौ पुनर्नमस्कारकृते कृते माधवस्याञ्जलौ।

(३) साकूतविस्मयहर्षमिति, आकूतेन "या बकुलमाला मया मालत्यै समर्पिता सैवेयमस्ति" इत्यभिप्रायेण, विस्मयेन विप्रयोगहेतुमालतीशरीरादपि बकुलमालायाः कथमिह प्राप्तिरित्याश्चर्येण, हर्षेण मालत्यभिज्ञानीभूतमालालाभजनितानन्देन च सह यथा स्यात्तथेत्यर्थः। स्तनोद्भेदेन स्तनयोरुन्नत्या दुर्ललिता दार्ढ्येन स्तनावरणवसनवशीकरणात् किञ्चिन्मालिन्यमापादिता मूर्त्तिः कान्तिर्देहस्तद्वा भूता इयं अनङ्गमन्दिरस्य कामदेवायतनस्य अङ्गने चत्वरे यो बकुलः बकुलवृक्षः तत्प्रसवमाला तत्कुसुमनिर्मितं माल्यं कथं केन प्रकारेण? अत्रागतमिति शेषः। समीक्ष्य कः सन्देहः? सैवेयं बकुलमालेत्यत्र कः संशयः? संशयनिरासकं हेतुमभिधातुमाह—तथाहीति। अस्याः बकुलमालायाः, स एवेति वक्ष्यमाणश्लोकान्तस्थितेन भाव इत्यनेनान्वेति।

(४) मुग्धेन्दुरिति। मुग्धः मेघावरणादिराहित्यात् समतीव मनोहरः य इन्दुश्चन्द्रः तद्वत् सुन्दरस्य तदीयमुखस्य मालतीवदनस्य अवलोकेन समीक्षणेन या हेला शृङ्गाररसाविर्भावसमुद्भूतो

---

(২) সৌদা। বকুলমালারূপ অভিজ্ঞানপ্রদর্শনের এই উচিত যুক্ত অবসর। (মাধবের অঞ্জলিতে বকুলমালার অর্পণ)

(৩) মাধ। (অভিপ্রায় বিস্ময় ও হর্ষের সহিত) প্রিয়তমা মালতীর স্তনদ্বয়ের উন্নতিবশতঃ দৃঢ়রূপে ধারণ করাতে মর্দ্দিত হওয়ায় যদ্দর্শনে কিঞ্চিৎ মলিনমূর্ত্তি আমার নির্ম্মিত এই মদনমন্দিরপ্রাঙ্গণস্থিত বকুলবৃক্ষের পুষ্পমালা এই স্থানে আসিল কি প্রকারে? (নিঃসংশয়ে অবলোকন করিয়া হর্ষের সহিত) এই যে সেই বকুলমালা ইহাতে আর সন্দেহ কি? যে হেতু—

(৪) মনোহরচন্দ্রের ন্যায় সুন্দর মালতীবদনের অবলোকনজনিত শৃঙ্গার-

[ प्रविश्य मकरन्दः । ]—किमन्यत्,
प्रभवति हि महिम्ना स्वेन योगीश्वरीयम् (१८)
[ नेपथ्ये । ] कथमतिदारुणो जनसंमर्द्दो वर्त्तते ? (२०)
मालत्यपायमधिगम्य विरक्तचेताः,
सांसारिकेषु विषयेषु च जीवितेषु ।

---

(१८) विलोक्येति, द्रुतमागान्तं मकरन्दं सहसोपस्थितान्तर्हितं तेजोजातञ्च निरीक्ष्येत्यर्थः। साद्भुतहर्षं आश्चर्य्यानन्दाभ्यां सह यथा स्यात्तथा आहेति शेषः।

कथमिति। इह अस्मिन् स्थाने मम वत्सः मकरन्दः कथं केन प्रयोजनेन सहसा उपस्थित इति शेषः। तस्य माधवसहचारित्वस्यैव स्वाभाविकत्वादिति भावः। तदेतत् परिलोकितं तेजोजातं किं ? किन्निमित्तकम् ?

मकरन्दः सहसा प्रविश्य परिश्रुतस्यास्यैव "तत् किमेत"दिति कामन्दकीप्रश्नस्योत्तरं ददाति—किमन्यदिति। अन्यत् किं न किमपि, इयं हि मदवलोकिता काचित् योगेश्वरी प्रकृष्टयोगसम्पत्शालिनी योगिनी स्वेन महिम्ना स्वकीययोगमाहात्म्येन प्रभवति। तथाच तस्या एवेदं तेजोजातं पूर्व्वमपीतादृशां तदीयतेजसां मया परिलक्षितत्वादिति भावः। इतएव "निर्णयः पुनः अनुभूतार्थकथन"मिति लक्षणादव निर्णयो नाम निर्व्वहणसन्धेरङ्गम्।

सहसा तादृशालौकिकतेजःपुञ्जदर्शनेन चकिता एव प्रथमं पतनात् किञ्चिदपेक्षा मकरन्दसन्दर्शनेन च सञ्जातवृत्तान्तावगतिवासनास्ततः सौदामिनीवृत्तान्तमवगत्य सद्य एव च मालतीमाधवावागच्छन्तौ निरीक्ष्य सर्व्वाः पतनाद्विरता इति विभावनीयम्।

(२०) नेपथ्य इति। अज्ञातवृत्तान्तः कश्चिदागन्तुकः जनवाहुल्यमालोक्य पृच्छति—कथमिति। अति दारुणः अति महान् जनसम्मर्द्दः लोकसङ्घर्षः।

(२१) विदितवृत्तान्तः कश्चिद्दुःखाभिभूतवनेचरः पूर्व्वोक्तप्रश्नस्योत्तरमाह—मालत्येति। "करुणवनेचरवचनादन्तरिता"मिति वक्ष्यमाणमाधवोक्तिरेवास्य वनेचरोक्तत्वं समर्थयतीति

---

(১৯) কাম। ( অবলোকন করিয়া আশ্চর্য্য ও হর্ষের সহিত ) আমার বৎস মকরন্দ এস্থানে হঠাৎ আসিল কি প্রয়োজনে ? এই তেজঃপুঞ্জেরই বা হেতু ? ( মকরন্দ প্রবেশ করিয়া ) অন্য আর কি হেতু হইবে ? এই যোগীশ্বরীই যোগপ্রভাবে এই তেজঃপুঞ্জ বিস্তার করিয়াছেন।

( নেপথ্যে ) অতি দারুণ জনসঙ্ঘর্ষ বর্ত্তমান কেন ?

অমাত্য ভূরিবসু মালতীর বিনাশ অবগত হওয়ার পরে সাংসারিক

यस्याः पुरा परिचयप्रतिबद्धवीज-
मुद्भूतभूरिफलशालि विजृम्भितं ते ॥ (५१)

मदयन्तिकालवङ्गिके। इयं सा अज्जा सोदामिनी। (प)

माल। बाढ़ं इमाए क्खु भअवदीसंवन्धपक्खबादिणीए णिव्-

---

(प) इयं सा आर्य्या सौदामिनी।

---

निःस्वार्थं मालत्युद्धारादिरूपैः बोधिसत्त्वं प्राणव्ययेनापि परोपकारं कर्त्तुं कृतसङ्कल्पं बुद्ध-विशेषं अतिक्रान्तैः वर्त्तमानैः विलसितैः आचरणैः स्पृहणीया माहृशामप्याकाङ्‌क्षणीया सिद्धिः मन्त्रार्थसिद्धिर्यस्यास्तादृशी त्वमेव जगतः सर्व्वलोकानां वन्द्या वन्दनीया नमस्कारयोग्या। तथाच सर्व्वनमस्कारयोग्यायास्तव मन्नमस्कारमप्यनुचितमिव मन्ये इति भावः। यस्यास्ते तव पुरा विद्याग्रहणकाले परिचयः निरतिशयश्रद्धाप्रावल्येनावगतिः स एव प्रतिवद्धं उत्पन्नं वीजं यस्य तथाभूतं इदं विजृम्भितं चेष्टितं मालत्युद्धाराद्याचरणं मिति यावत्। उद्भूतैः सञ्जातैः भूरिभिः वहुभिः फलैः माधवलवङ्गिकादीनां जोवनपालनरूपैः शालते शोभते इति तयोक्तं अभूदिति शेषः। विद्याग्रहणकालसम्बद्धा मयि तवापरिमितश्रद्धैव मालत्युद्धाररूपकार्य्यस्य वीजं तेन च मालत्युद्धाररूपकार्य्येण मालतीशोकेन जीवनविसर्ज्जनोद्यतानां माधवादीनां जीवन-रक्षणरूपं प्रचुरतरफलं सम्पादितमिति त्वदीयनिःस्वार्थपरोपकारिता सर्व्वथैवाशेषधन्यवाद-योग्येति सरलार्थभावार्थौ।

अत्र विजृम्भिते श्लिष्टविशेषणसाम्येन प्रयत्नोप्तवीजाङ्कुरादिक्रमिकफलशालितृत्वाद्युदि-व्यवहारसमारोपात् समासोक्तिरलङ्कारः। "प्रश्रयादनुवर्त्तनं अनुवृत्ति"रिति लक्षणादनुवृत्ति-र्नाम नाट्यालङ्कारश्च। वसन्ततिलकावृत्तम्।

(प) मदेति। इयं परिदृश्यमाना, आर्य्या सौदामिनी सा? या वकुलमालामादाय माधवान्तिकमागता सां किमित्यर्थः।

---

(৫১) আরও দেখ। বোধিসত্ত্ব নামক বুদ্ধবিশেষেরও অতিক্রমণ-কারী এবম্বিধ (নিঃস্বার্থভাবে মালতীর উদ্ধারাদিরূপ) ব্যবহার দ্বারা যাহার মন্ত্রার্থসিদ্ধি আমাদের ও স্পৃহণীয়, তাদৃশ তুমিই জগতের বন্দনীয়া। সেই তোমার পূর্ব্ব পরিচয়রূপ সমুৎপন্ন বীজজন্য মালতীর উদ্ধাররূপ আচরণ মাধবাদির জীবনরক্ষারূপ সমুৎপন্ন বহুফলশালী হইয়াছে।

(প) মদয়ন্তিকা ও লবঙ্গিকা। এই আর্য্যা সৌদামিনীই কি তিনি?

माधवमकरन्दौ । अहो नु खलु भोः ! । (५२)

अपि चिन्तामणिश्चिन्तापरिश्रममपेक्षते ।
इदं त्वचिन्तितं मन्ये कृतमाश्चर्यमार्य्यया ॥ (५३)

सौदा । [ स्वगतम् । ] हन्त ! लज्जयति मामेव सौजन्य मेषाम् । [ प्रकाशम् । ] भगवति ! एतत्प्रहृष्टनन्दनाभिनन्दितेन राज्ञा पद्मावतीश्वरेण भूरिवसोः प्रत्यक्षमभिलिख्य पत्रम् आयुष्मते माधवस्य प्रेषितम् । [ इति पत्रमर्पयति । ] (५४)

---

(५२) अहो नु खलु भोरिति हर्षाश्चर्य्यद्योतकमनेकमव्ययम् ।

(५३) अपीति । चिन्तामणिरपि प्रार्थकस्य चिन्तानुसारेण फलप्रदो मणिविशेषोऽपि चिन्ता परिश्रमं प्रार्थकस्य चिन्तारूपं परिश्रमं अपेक्षते फलदानविषये प्रतीक्षते । तु किन्तु आर्य्यया श्रेष्ठया अनया सौदामिन्या अचिन्तितं अस्माभिरभावितं मालत्यादीनामस्माकं परिरक्षणरूपमचिन्तितकार्यमित्यर्थः, कृतं सम्पादितं, इदं आश्चर्य्यं मन्ये ।

अत्रोपमेयभूतायाः सौदामिन्याः उपमानाच्चिन्तामणेराधिक्यवर्णनेन व्यतिरेकालङ्कारः, स च श्लेषानुप्राणेन संसृज्यते । तेन च सौदामिन्याः समतीव दयावतीत्वरूपं वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ।

(५४) सौदेति । एतेषां कामन्दक्यादीनां सौजन्यं प्रशंसावादः मां अत्यन्तं निरतिशयं लज्जयति लज्जायुक्तां करोति । आत्मप्रशंसाश्रवणे सज्जनानां लज्जायाः स्वाभाविकत्वादिति भावः । प्रहृष्टेन भूरिवसोरनलप्रवेशनिवारणात् सन्तुष्टेन नन्देन अभिनन्दितः परमभाग्यशालितया प्रशंसितः तेन । माधवस्येति समीपे इति शेषः ।

---

(৫২।৫৩) মাধব ও মকরন্দ। অহো কি আশ্চর্য্য!! চিন্তামণিও ফলদান করিতে যাচকের চিন্তারূপ পরিশ্রম অপেক্ষা করিয়া থাকে। কিন্তু এই মাননীয়া যোগিনী আমাদের অচিন্তিত বিষয় সম্পন্ন করিয়াছেন, অতএব ইহা আশ্চর্য্য মনে করিতেছি।

(৫৪) সৌদা। (স্বগত) অহো! ইহাদিগের সৌজন্য আমাকে অত্যন্ত লজ্জিতা করিতেছে। (প্রকাশ্যে) ভগবতি! হর্ষযুক্ত নন্দন কর্ত্তৃক প্রশংসিত রাজা পদ্মাবতীশ্বর ভূরিবসুর সমক্ষে এই পত্র লিখিয়া দীর্ঘজীবী মাধবের সমীপে পাঠাইয়াছেন। (পত্র অর্পণ করিল)

माधवमकरन्दौ सकौतुकम्। भगवति! अन्यथा वस्तुवृत्तमन्यथा वचन मार्य्यायाः। (६३)

लव। [जनान्तिकम्।] भअवदि! किं एत्थ पडिवज्जिदव्वं। (व)

काम। [स्वगतम्।] सम्प्रति मदयन्तिकासम्बन्धात् नन्दनोपग्रहात् प्रत्यस्तग्रहाः खलु वयम्। [प्रकाशम्।] वत्सौ! न खलु अन्यथा वस्तुवृत्तं, यतः श्रावकावस्थायामस्मत् सौदामिनीप्रत्यक्षमनयो-

---

(व) भगवति! किमत्र प्रतिपत्तव्यम्?

---

(ल) कथमिवेति पूर्णो मनोरथ इति शेषः। पिता नन्दनायैवास्याः स्थिरीकरणा-देतस्मादावयोर्विवाहरूपसम्बन्धात् कथं तयोर्मनोभिलाषः पूर्णो भवितुमर्हतीति भावः।

(६३) भावेति। वस्तु एतद्विवाहसम्बन्धः अन्यथा अन्यप्रकारेण भूरिवसोरननुमत्या वरकन्ययोर्दृढतरानुरागेण भगवत्या अनुग्रहेण चेत्यर्थः, वृत्तं निष्पन्नं। आर्य्यायाः मान्यायाः सौदामिन्यास्तु वचनं "अद्य नाथयो"रित्यादि वाक्यं अन्यथा तदन्यप्रकारेण तद्विपरीतभावेनेति यावत्, वृत्तं उत्पन्नं। तथाहि भूरिवसुः नन्दनेन सहैव मालतीविवाहनिष्पादनं स्थिरीकृतवान्, सौदामिन्या पुनरुच्यते भूरिवसुर्देवरात[illegible]सम्बन्धकरणाभिलाषा[illegible]दिति, तस्माद्विवाहनिष्पत्तिसौदामिनीवचनयोर्महदन्तरमस्तीति भावः।

(र) लवेति। अत्र—माधवमकरन्दयोर्विषये किं प्रतिपत्तव्यं मया किमुचितं मदीयम्। एतेन लवशङ्काया अपि मनसि तादृशाकाङ्क्षा समुदित इति व्यज्यते।

(६४) कामेति। मदयन्तिकासम्बन्धात् माधवस्य अनुग्रहात् मकरन्देन सह मदयन्तिका-विवाहसम्बन्धादितः नन्दनोपग्रहात् नन्दनकर्त्तृकाभ्युपगमसाहाय्यात् प्रत्यस्तग्रहाः [illegible]। पूर्वं [illegible]

---

(গ) মাধ। (স্বগত) কি প্রকার?

(৬৩) মাধব ও মকরন্দ। (কৌতুকের সহিত) ভগবতি! অন্য প্রকারে বস্তুবৃত্ত অন্যপ্রকারে নিষ্পন্ন হইয়াছে, আর্য্যা সৌদামিনীর বাক্য অন্যরূপ।

(ঙ) লব। (জনান্তিকে) ভগবতি! মাধব ও মকরন্দের [illegible] আপনার কি বক্তব্য?

(৬৪) কাম। (স্বগত) সম্প্রতি মাধবের [illegible] মদয়ন্তিকার সম্বন্ধ [illegible]

निष्णातश्च समागमोऽपि विहितस्तुत्प्रेयसः कान्तया
सम्प्रीतौ नृपनन्दनौ, किमपरं श्रेयस्तदप्युच्यताम् ॥ (६६)

[माध। सहर्षं प्रणमति।] भगवति! अतोऽपि परं प्रियमस्ति
तथापि इदमस्तु, भगवतीप्रसादात्। (६७)

---

प्रियतमस्य मकरन्दस्य कान्तया तत् प्रियतमया मदयन्तिकया सह निष्णातः चातुर्य्यपूर्णः समागमः संयोजनमपि विहितः निष्पादितः। तथा नृपनन्दनौ नृपः नन्दनश्चेतुभौ सम्प्रीतौ सम्यक्प्रीतियुक्तौ, सञ्जाताविति शेषः। स्वकीयाभिप्रायासिद्धावपि योग्यसमागमदर्शनादिति भावः। अपरं एतेभ्यः अन्यत् यत् श्रेयः तवाभीप्सितं मङ्गलं तदपि उच्यतां अभिधीयताम्। मया तदप्यवश्यं सम्पादनीयमिति भावः।

"वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यते" इति लक्षणादेव काव्यसंहारो नाम निर्व्वहणसन्धेरङ्गम्। शार्दूलविक्रीड़ितं वृत्तम्।

अत्र माधवस्य मालतीलाभ एव कार्य्यं नामार्थप्रकृतिः प्रथमाङ्कादावुपन्यस्तानामनुरागादिरूपबीजाद्यर्थानां सर्व्वेषामेव तत्फलकत्वात्। तल्लक्षणं यथा दर्पणे—

"अपेक्षितन्तु यत् साध्यमारम्भो यन्निबन्धनः।
समापनन्तु यत्सिद्ध्यै तत्कार्य्यमिति सम्मतम् ॥"

एवं मकरन्दस्य मदयन्तिकालाभेन सह माधवस्य मालतीलाभ एव फलावस्था। तल्लक्षणमपि तत्रैव—

"सावस्था फलयोगः स्याद्यः समग्रफलोदयः"।

(६७) माधेति। अतोऽपि परं अतःपरमपि प्रियमस्ति किमिति काकुः। नास्त्येवेत्यर्थः। सर्व्वेषामेव प्रियाणां भगवत्या सम्पादनादिति भावः। तथापि सर्व्वेषां प्रियाणां भगवत्या सम्पादितत्वेऽपि, भगवतीप्रसादात् भगवत्यास्तवानुग्रहात्, इदं वक्ष्यमाणं अस्तु भवतु।

---

সেই মঙ্গল সম্পন্ন হইয়াছে। মদয়ন্তিকার সহিত তোমার পরম প্রিয়তম মকরন্দের চাতুর্য্যপূর্ণ সমাগম ও নিষ্পাদিত হইয়াছে। রাজা এবং নন্দনও প্রীতিযুক্ত হইয়াছে। এখন অপর আর যাহা অভীপ্সিত থাকে তাহাও বল। (আমি সম্পাদন করিব)।

(৬৭) মাধ। (হর্ষের সহিত) ভগবতি! অতঃপরও আর কি প্রিয় আছে? তথাপি আপনার প্রসাদে এই হউক—

दुव्वारुव्वे अव्वईकरुव्वत्तसाणबन्धणं धारिअं हिअअम्। गमिआ अ वारंवारं सविसेसदूसहारम्भदूमणाइअसहीअणा सरीरसन्दावा, कधंवि अदिवाहिदा चन्दादवमलअमारुदप्पमुहा अणत्थपरम्परा, सम्पदं उण णिरासह्मि संवुत्तेसि, तुएवि पिअसहीए सव्वदा सुमरि-दव्वह्मि। एसा अ सिरिमाहवसहत्थणिम्माणमणहरा बउलमाला मालदीजीविदणिव्विसेसं पिअसहीए दट्ठव्वा सव्वधा हिअए धारणीएत्ति। (२)

---

सुधामनोरथैश्च अविरतविजृम्भमाणदुर्वारोद्वेगव्यतिकरोद्वर्त्तमानबन्धनं धारितं हृदयम्। गमिताश्च वारंवारं सविशेषदुःसहारम्भदुर्मनायितसखीजनाः शरीरसन्तापाः, कथमपि अतिवाहिताः चन्द्रातपमलयमारुतप्रमुखा अनर्थपरम्पराः, साम्प्रतं पुनर्निराशास्मि संवृत्ता इति। त्वयापि प्रियसख्या सर्वदा स्मर्त्तव्यास्मि। एषा च श्रीमाधवस्वहस्तनिर्माणमनोहरा वकुलमाला मालती-जीवितनिर्विशेषं प्रियसख्या द्रष्टव्या, सर्वथा हृदये धारणीया इति।

---

मम नयनानां (बहुवचनं दर्शनवासनातिशयद्योतनार्थं, क्वचित् "लोचनयो"रित्येव पाठः) महोत्सवः परमानन्दः न समानितः न सम्पादितः। सुधा मनोरथैः "यथा तेन सममेव-मेवं सुखमनुभविष्यामी"ति वृथाभिनिवेशैः, अविरतं अविच्छेदं विजृम्भमाणस्य वर्द्धमानस्य दुर्वारोद्वेगस्य दुर्दमनीयकामोद्वेगस्य यो व्यतिकरः सम्पर्कः तेन उद्वर्त्तमानं उच्छिद्यमानं बन्धनं सम्बन्धो यस्य, तथाभूतं हृदयं धारितं एतावत्कालं परिरक्षितं। तथाविध-मनोरथो यदि नाभविष्यत् तदा वोद्वेगेन मम हृदयमुन्मथितमभविष्यदिति भावः। सविशेषैः सातिशयैः आरम्भैः उशीरानुलेपनकमलिनीदलनिर्मितशयनादिव्यापारैः दुर्मनायिताः क्लेशव्यापारेणसमादुःखिताः कृताः सखीजना यैः तथाभूताः शरीरसन्तापाः सन्ताप-हेतवः गमिताः अनुभूताः। चन्द्रकिरणादीनां विरहिजनसन्तापकत्वं प्रसिद्धमेव, अत एवा-नर्थहेतुत्वं मार्कम। अनर्थपरम्पराः अविच्छिन्नदुःखहेतुपातः, कथमपि अतिकष्टेन

---

[illegible] উল্লিখিত করিয়াছে, তাহার [illegible] করিয়াছি। [illegible] করিয়াছি। [illegible]

माल। [ स्वगतम्। ] अहो! लवङ्गिआए मालदी बिप्पलद्धा। (ल)

माध। अयि! स्ववेदनामात्रनिवेदिनि! परव्यथानभिज्ञे! इयमुपालभ्यसे। (४०)

उद्दामदेहपरिदाहमहाज्वराणि,
सङ्कल्पसङ्गमविनोदितवेदनानि।
त्वत्स्नेहसंविदवलम्बितजीवितानि,
किं वा मयापि न दिनान्यतिवाहितानि? (४१)

---

(ल) अहो लवङ्गिकया मालती विप्रलब्धा।

---

यस्मात्तथाभूतया अनया मालत्या अवपीड्य मां गाढमालिङ्ग्य मे मम त्वचि स्पर्शेन्द्रिये कर्पूरादीनि प्रसिद्धानि आदिशब्देन चन्द्रकिरणादेः परिग्रहः, तेषां वर्गः समूहः एकीकृतः मिश्रीकृतः सन् निषिक्तः क्षिप्त इव। अन्यथा एतादृशशीतलत्वासम्भवादिति भावः।

अत्र निषिक्त इवेति वाच्याक्रियोत्प्रेक्षालङ्कारः, तेन च मालत्याः स्पर्शस्यातीव शैत्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। वसन्ततिलकावृत्तम्।

(ल) विप्रलब्धा सावस्थानस्थाने अमुं संस्थाप्य प्रतारिता। यद्यपि लवङ्गिकया स्वाभिप्रेतमेव साधितं, तथाप्याकारगोपनेन प्रतारणमुक्तम्।

(४०) अयीति। माधवव्यथायाः प्रसङ्गेनोपाकथनाभावादिदं। परव्यथेति परस्य माधवस्य मम चित्तपीडेत्यर्थः। इयं त्वं उपालभ्यसे उक्तसम्बोधनपदाभ्यां तिरस्क्रियसे।

(४१) स्ववेदनां प्रकटयितुमाह—उद्दामेति। उद्दामः उत्कटः देहस्य शरीरस्य परिदाहः कामजसन्ताप एव महाज्वरो येषु तथाभूतानि, सङ्कल्पसङ्गमेन मानसिकालिङ्गनादिना

---

হইয়াছে, এইরূপ মালতী আমায় গাঢ় আলিঙ্গন করিয়া আমার স্পর্শেন্দ্রিয়ে কর্পূর, মুক্তাহার, হরিচন্দন ও চন্দ্রকান্ত মণির নির্যাস, শৈবাল, মৃণাল এবং হিমানিসমূহ মিশ্রীকৃত করিয়া যেন আমার হৃদয়ে নিষিক্ত করিতেছে।

(ল) মাল। (স্বগত) অহো লবঙ্গিকা কর্তৃক মালতী প্রতারিতা হইয়াছে।

(৪০) মাধ। অয়ি! স্ববেদনামাত্রনিবেদনকারিণি! পরব্যথানভিজ্ঞে! তোমাকে উক্ত সম্বোধনে তিরস্কার করিতেছি।

त्वं वत्सलेति कथमप्यवलम्बितात्मा,
सत्यं जनोऽयमियतो दिवसाननैषीत् ।
आवद्धकङ्कणकरप्रणयप्रसाद-
मासाद्य. नन्दतु चिराय, फलन्तु कामाः ॥ (४३)

लव । महाणुभाव ! हिअए वि अपड़िहदसअंगाहसाहसो अअं जणो, किं दाणिं करग्गहणे विआरेदि । (प)

---

(प) महानुभाव ! हृदयेऽपि अप्रतिहतस्वयंग्राहसाहसोऽयं जनः किमिदानीं करग्रहणे विचारयति ?

---

(४२) महाभागे इति मालत्याः सम्बोधनं, एतन्माधवेन यदुक्तं तत् एवं यथार्थमित्यर्थः ।

(४३) यथार्थत्वं समर्थयितुमाह—त्वमिति । त्वं वत्सला अस्मिन्ननुरक्ता इति हेतोरेव कथमपि अतिक्लेशेन अवलम्बितः तव विरहदुःखेऽपि विधृतः आत्मा जीवितं येन तथाभूतः, अयं जनः इयतो दिवसान् तव दर्शनत एतावद्दिनानि अनैषीत्, त्वत्प्राप्तिप्रत्याशयैव अतिक्रान्तवानिति सत्यं । तथाच तवानुरागादन्योऽस्य जीवनधारणहेतुरित्यतः परमपि त्वयैवास्य जीवनरक्षणे सर्व्वथा यतितव्यमिति भावः। अत एव आवद्धकङ्कणस्य विधृतविवाहसूत्रस्य ( कङ्कणं करभूषायां सूत्रमङ्गलयोरपीति मेदिनी ) करस्य तव पाणेः प्रणयः परिग्रहः स एव प्रसादः अनुग्रहस्तं आसाद्य प्राप्य नन्दतु माधवः परमानन्दं लभताम्, कामाः अस्माकं मनोरथाश्च चिराय फलन्तु सफलाः सन्तु ।

अत्र चतुर्थचरणे प्रार्थनाद्यर्थत्वेऽपि समुच्चयार्थकचकारादेरभावात् न्यूनपदत्वदोषः । वसन्ततिलकावृत्तम् ॥

(प) लवेति । हृदयेऽपि स्वक्षसि अपि ( हृदयं वक्षसि स्वान्ते इति हेमः )

---

(৪২) লব। মহাভাগে ! সখা মাধব যাহা বলিয়াছে, তাহা সত্য ।

(৪৩) "তুমি ইহার প্রতি অনুরক্ত" এই কারণেই যে কেবল অতিকষ্টে জীবন ধারণ করিয়া ( তোমাকে পাওয়ার আশায় ) মাধব এতদিন অতিবাহিত করিয়াছে সত্য। অতএব বিবাহসূত্রধারী তোমার পাণিগ্রহণরূপ অনুগ্রহ লাভ করিয়া মাধব পরম আনন্দ উপভোগ করুক, আমাদের মনোরথ চির-কালের জন্য সফল হউক ।

काम। (तस्याश्चिबुकम् उन्नमय्य) वत्से!

पुरश्चक्षूरागस्तदनु मनसोऽनन्यपरता,
तनुग्लानिर्यस्य त्वयि समभवद्यत्र च तव।
युवा सोऽयं, प्रेयानिह सुवदने! मुञ्च जड़ताम्
विधातुर्वैदग्ध्यं विलसतु, सकामोऽस्तु मदनः॥ (४६)

लव। भअवदि! कसणचउद्दसीरअणीमसाणसञ्चरणणिवत्तिदसमव्ववसाअणिट्ठापिअचण्डपासण्डपअण्डदोद्दण्डसाहसो साहसिओ क्खु एसो, अदो मे पिअसही उक्कम्पिदा। (ह)

---

(ह) भगवति! कृष्णचतुर्दशीरजनीश्मशानसञ्चरणनिवर्त्तितविषमव्यवसायनिष्ठापितचण्डपाषण्डप्रचण्डदोर्दण्डसाहसः साहसिकः खलु एषः, अतो मे प्रियसखी उत्कम्पिता।

---

(४६) पुर इति। यस्य माधवस्य त्वयि यत्र च माधवे तव पुरः प्रथमं चक्षूरागः नयनप्रीतिः, तदनु तदनन्तरं मनसश्चित्तस्य अनन्यपरता अनन्यनिष्ठता एकाग्रतेति यावत्, ततश्च तनुग्लानिः अलाभवशात् कामजशरीरसन्तापः समभवत्। अयं स प्रेयान् तव प्रियतमः युवा माधवः इह अत्र स्थाने उपस्थितः इति शेषः। अत एव हे सुवदने! जड़तां कार्य्याकार्य्यविमूढ़तां मुञ्च परिहर। जड़तां परित्यज्य निःशङ्कमेनं वृणीष्वेति भावः। तेन च विधातुः विश्वसृजः वैदग्ध्यं युवयोर्निर्म्मितपाण्डित्यं विलसतु परस्परं योग्यसम्मेलनेन विकाशताम्। मदनः कामश्च सकामः युवयोः परस्परसमागमेन पूर्णमनोरथः अस्तु भवतु।

अत्रापि चतुर्थचरणे समाकाङ्क्षितसमुच्चयार्थकचकारादेरभावान्न्यूनपदत्वदोषः।

"अन्योऽन्यमुभयोरेकक्रियायाः कारणं मिथः" इति दर्पणलक्षणादत्र प्रथमार्द्धे अन्योऽन्यालङ्कारः, एवमप्रस्तुतानां चक्षूरागादीनां समभवदित्येकक्रियायाः कर्त्तृत्वे नान्वयात्तुल्ययोगिता, "मुञ्च

---

(৪৬) কাম। (মালতীর চিবুক উন্নমিত করিয়া) যেই মাধবের তোমাতে ও যেই মাধবে তোমার প্রথমে নেত্রপ্রীতি তৎপরে চিত্তের একাগ্রতা ও তৎপরে শরীরগ্লানি হইয়াছিল। সেই প্রিয়তম যুবা মাধব এস্থানে উপস্থিত। অতএব অয়ি সুবদনে! তুমি কর্ত্তব্যাকর্ত্তব্য চিন্তা পরিত্যাগ কর। অর্থাৎ নিঃশঙ্কচিত্তে ইহাকে বরণ কর। (পরন্তু তদ্দ্বারা) বিধাতার নির্ম্মাণপাণ্ডিত্য প্রকাশিত হউক ও কামদেব সফলকাম হউক।

काम। वत्स माधव! (४८)

माध। आज्ञापय। (४९)

काम। इयम् अशेषसामन्तमस्तकोत्तंसपरागरञ्जितचरणाङ्गुलेः अमात्यभूरिवसोः एकम् अपत्यरत्नं मालती, भगवता सदृशसंयोगरसिकेन वेधसा, मन्मथेन, मया च, तुभ्यं प्रदीयते। [इति रोदिति।](५०)

मक। फलितं हि नस्तर्हि भगवतीपादप्रसादेन। (५१)

---

(च) हा तात हा अम्बेति, युवयोः सम्मतिमप्यनपेक्षमाणैवं कुलकन्यकाजनविरुद्ध-माचरन्ती कथं पुनर्मुखं दर्शयेयमिति शेषः। तथाच विचारं तदानीमेव माधवपाणिग्रहणस्य कर्त्तव्यता स्थिरीकृतेति व्यज्यते।

(५०) कामेति। अशेषाणां निरवशेषाणां सामन्तानां अधिनीकृतभूपतीनां ये मस्त-कोत्तंसाः शिरोऽलङ्कारास्तद्रूपतापन्नपुष्पाणीति यावत्, तेषां परागैः रजोभिः रञ्जिताः चरणाङ्गुलयो यस्य तथाभूतस्य। (एतेनास्याः परमैश्वर्य्यशालिकन्यात्वं सूचितम्) अपत्यरत्नं अतुलनीयगुणलावण्यसम्पन्नत्वात् रत्नमिवापत्यम्। तथाच परमैश्वर्य्यशालिनोऽपत्यत्वात् पित्रो-र्व्वात्सल्यैकभाजनत्वात् सौन्दर्य्याद्यनेकगुणसम्पन्नत्वाच्च ममतोऽपि नास्यामनादरस्त्वया करणीय इति भावः। सदृशसंयोगरसिकेन योग्यसम्मेलनाभिनिवेशशालिना वेधसा विधिना (तेनैव प्रथमं ललाटपटे लिखितत्वादिति भावः) मन्मथेन कामेन (तेनैव तदनन्तरमकस्मादुभयो-र्निरतिशयासक्तिजननादिति भावः) मया च (तदनुगुणलौकिकप्रयत्नकरणादिति भावः) तुभ्यं प्रदीयते। संप्रदानस्य विघ्नपक्षरत्वादीनां परिचिन्तनमेव निरतिशयवात्सल्यशालिन्या मातृस्थानीयायाः कामन्दक्याः रोदनहेतुः।

---

(ক) মাল। হা! তাত! হা! মাতঃ! (তোমাদের অমতে কুল-কন্যাজনবিরুদ্ধ এইরূপ আচরণ করিয়া কিরূপে মুখ দেখাইব)

(৪৮) কাম। বৎস মাধব!

(৪৯) মাধ। আজ্ঞা করুন।

(৫০) কাম। যাহার চরণাঙ্গুলি সমস্ত অধিকৃত নৃপতিগণের মস্তকালঙ্কার পুষ্পপরাগে রঞ্জিত হয়, তাদৃশ অমাত্য ভূরিবসুর একমাত্র কন্যা মালতীকে প্রথমে বিধাতা তৎপরে কামদেব ও তৎপরে এই আমি তোমায় অর্পণ করিতেছি। (কামন্দকী রোদন করিতে লাগিলেন)

माध। तत्किमिति वाष्पायितं भगवत्या ?। (५२)

काम। [चीवराञ्चलेन नेत्रे परिमृज्य।] विज्ञापयामि कल्याणिनम्। (५३

माध। ननु आज्ञापय। (५४)

काम। परिणतिरमणीयाः प्रीतयस्त्वद्विधानाम्
अहमपि तव मान्या हेतुभिस्तैश्च तैश्च।
तदिह सुवदनायां तात! मत्तः परस्तात्-
परिचयकरुणायां सर्व्वथा मा विरंसीः॥ (५५)

---

(५१) तर्हि माधवाय मालत्या दाने निष्पन्ने, फलितं सञ्जातफलेन भूतम् (भावे क्तप्रत्ययः)।

(५२) वाष्पायितमिति "वाष्पादिभ्य उद्वमने" इत्यायन्नादेवाथशब्दाद्भावे क्तप्रत्ययेन निष्पन्नम्। तदाच वाष्पोद्वमनं कृतमित्यर्थः।

(५३) कल्याणिनं शुभलाभवन्तं त्वां विज्ञापयामि वाष्पोद्वमननिमित्तमिति शेषः।

(५५) परिणतेति। हे तात! पुत्र! (पुत्रे पितरि पूज्ये च तातशब्दः प्रयुज्यते इति शब्दार्णवः) (पुत्रत्वेन सम्बोधनं वात्सल्यातिशयद्योतनार्थम्) त्वद्विधानां त्वादृशानां नाना-सद्गुणसम्पन्नानां पुरुषाणां प्रीतयः यस्मिन् कस्मिन्नपि अनुरागाः परिणत्या परिपाकेण रमणीयाः मनोहराः क्रमशः एव दृढतामापन्ना इति यावत्, भवन्तीति शेषः। अहमपि तैस्तैरेव तव पित्रा त्वयैव च सहाध्यायित्वादिभिः हेतुभिः निमित्तैः मान्या माननीया अनतिक्रमणीयवचनेति यावत्। तत्तस्मात् मत्तः परस्तात् परवर्त्तिनि समये मयि परोक्षतां गतायामित्यर्थः, इह अस्यां सुवदनायां मालत्यां परिचयः गाढ़प्रणय एव करुणा कृपा तस्याः सकाशात् मा विरंसीः

---

(৫১) মক! তবে ভগবতীর পদপ্রসাদে আমাদের পক্ষ সফল হইল।

(৫২) মাধ। তবে ভগবতী অশ্রুমোচন করিতেছেন কেন?

(৫৩) কাম। (চীবরাঞ্চলে নেত্র মার্জ্জন করিয়া) শুভলাভবতে (তোমাকে) জানাইতেছি।

(৫৪) মাধ। আজ্ঞা করুন।

(৫৫) কাম। হে বৎস! তোমার ন্যায় নানা সদ্গুণসম্পন্ন পুরুষের অনুরাগ পরিণতিতে রমণীয় (অর্থাৎ ক্রমশঃ দৃঢ়) হইয়া থাকে। তোমার

साध। भगवति! शुभमपि बहुनयम् अतिसङ्कटम् इदं वयस्यस्य। (७०)

काम। आः कस्त्वमस्यां चिन्तायाम्?। (७१)

साध। एवं भगवती एव जानाति (७२)

[प्रविश्य मकरन्दः। विहसन्।] वयस्य! मालती अस्मि।

[सर्व्वे सकौतुकं पश्यन्ति।] (७३)

---

तिरस्करिणीं अन्तर्धाय भवतीनां मम च मध्ये विलम्बिनीं विधाय तद्व्यवहितो भूत्वेत्यर्थः। अन्यथा स्त्रीजनसन्निधौ पुरुषस्यानभ्यस्तस्त्रीजनोचितवस्त्रपरिधाने लज्जासंशसम्भवादिति भावः।

(७०) इदं मालतीवेशेन नन्दनप्रतारणपुरःसरमदयन्तिकोपयमनं शुभमपि बहुनयं अनेकविपत्तिशङ्काकुलं "सुलभबहुनय"मिति पाठे तु सुप्राप्यबहुविपत्तिकमित्यर्थः। अतिसङ्कटं अतिदूरसाधनीयम्। तथा चैतदनुष्ठानं न सुष्ठुतया मह्यं रोचत इति भावः।

(७१) अस्यां इदं बहुनयं अतिशङ्कनमतः कर्त्तव्यं नवेत्यादिरूपायां चिन्तायां त्वं कः त्वं नैवाधिकारीत्यर्थः। युष्माकं मङ्गलामङ्गलयोश्चिन्तनभारम्भ मयैव स्वशिरसि विधृतत्वा-द्विपत्पातसम्भावनातिरोधानोपायपरिकल्पनाच्चे ति भावः।

(७२) एवं तच्चिन्तायां ममाधिकारो नास्तीति सत्यं। भगवत्येव नत्वहमित्येवार्थः। जानातीति, एतादृशानुष्ठाने शुभमशुभं वा भवेदिति शेषः। तथाच भगवत्यै यद्रोचते तदेव भवत्विति भावः।

(७३) प्रविश्येति। "स्त्रीवेशधारिणां पुंसां नाट्य श्लक्ष्णं विगूढक"मिति दर्पणलक्षणादव विगूढकं नाम नाट्याङ्गं। तथा "कपटं मायया यत्र रूपमन्यद्विभाव्यते" इति तल्लक्षणात् कपटं नाम नाट्यालङ्कारश्च।

---

(৬৯) মক। ভগবতী যাহা আজ্ঞা করিলেন তাহাই হইবে। তবে মন্দির-পার্শ্ব হইতে বস্ত্রনির্ম্মিত তিরস্করিণী আনিয়া তাহা আপনাদের ও আমার মধ্যে বিলম্বিত করিয়া বস্ত্রাদি পরিধান করি। (তাহাই করিল)

(৭০) মাধ। ভগবতি! মালতীবেশে নন্দনকে বঞ্চিত করিয়া মদয়ন্তিকার পাণিগ্রহণ বয়স্যের পক্ষে শুভ হইলেও বহু বিপত্তিসঙ্কুল ও অতি দুঃসাধ্য।

(৭১) কাম। আঃ এ চিন্তা করিবার তুমি কে?

(৭২) মাধ। তাহা ঠিক। শুভ কি অশুভ হইবে তাহা ভগবতীই জানেন।

माध। [ मकरन्दं परिष्वज्य, सोपहासम्। ] भगवति! कृतपुण्य एव नन्दनो, यः प्रियामीदृशीं मनसा मुहूर्त्तमपि कामयिष्यते। (७४)

काम। वत्सौ मालतीमाधवौ! इतो निर्गत्य वृक्षगहनेन गम्यताम् उद्वाहमङ्गलार्थम् अस्मद्विहारिकायाः पश्चादुद्यानवाटः, सुविहितं च तत्रैव वैवाहिकं द्रव्यजातम् अवलोकितया। भूयश्च (७५)

गाढोत्कण्ठकठोरकेरलवधूगण्डाच्छपाण्डुच्छदैः
ताम्बूलीपटलैः पिनद्धफलितश्यामस्त्रपूगद्रुमाः।

---

(७४) यः ईदृशीं परमसुन्दरीं प्रियां मनसा "न तु कायेन" मुहूर्त्तमपि "न तु बहुक्षणं" कामयिष्यते कामवासनाविषयीकरिष्यते, स नन्दनः कृतपुण्य एव, पुण्यकर्म्मणा विना ईदृक्सुन्दरस्त्रियाः क्षणं मनसा कामवासनाविषयीकरणमप्यसम्भवमिति भावः। एतेन मकरन्दकृतवेशविन्यासस्यातीव नैपुण्यं सूचितम्।

(७५) उद्वाहमङ्गलार्थं देशाचारविहितवैवाहिकमङ्गलाचारानुष्ठानार्थं, अस्मद्विहारिकायाः मदीयावसथस्य ( विहारो बौद्धालयस्य संज्ञा, तस्मात् क्षुद्रार्थे कप्रत्ययेन स्त्रियां विहारिकेति सिद्धम् ) उद्यानवाटः उपवनभागः, तत्रैव उद्यानवाटे वैवाहिकं द्रव्यजातं उद्वाहोपयोगिदीपधूपमाल्यचन्दनादिद्रव्यसमूहः, अवलोकितया तन्नामधेयया कयाचिन्मदीयशिष्यया सुविहितं सुसज्जितं। तदाच तत्र गत्वा वैवाहिकीमङ्गलक्रिया सम्पाद्यतामिति भावः। भूयश्च—पुनश्च।

(७६) गाढेति। गाढ्या अतिशयया उत्कण्ठया प्रियविरहजनितौत्सुक्येन कठोरः प्रौढः यः केरलवधूनां केरलदेशीयस्त्रीणां ( एतेषां पदानामुपादानं पाण्डुलातिशयद्योतनार्थं ) गण्डः

---

(৭৩) ( মকরন্দ প্রবেশ করিয়া হাসিতে হাসিতে ) বৎস আমি মালতী হইয়াছি। ( সকলে কৌতুহলের সহিত দেখিতে লাগিল।

(৭৪) মাধব ( মকরন্দকে আলিঙ্গন করিয়া উপহাসের সহিত ) ভগবতি! যে নন্দন এইরূপ সুন্দরী প্রিয়াকে মুহূর্ত্তের জন্যও মনে মনে কামবাসনার বিষয়ীভূত করিবে, সেই নন্দন অবশ্যই পুণ্যকর্ম্ম করিয়াছে।

(৭৫) কাম। বৎসে মালতি! ও বৎস মাধব! তোমরা এস্থান হইতে নির্গত হইয়া বৈবাহিক মঙ্গলাচারসম্পাদনের জন্য বনের মধ্য দিয়া আমার ক্ষুদ্র বৌদ্ধাশ্রমের পশ্চাদ্বর্ত্তি উপবনে গমন কর। আমার অবলোকিতা নাম্নী শিষ্যা সেখানেই বৈবাহিক মঙ্গলাচরণের উপযোগি নানাদ্রব্য সমূহ সজ্জিত করিয়া রাখিয়াছে। পুনশ্চ—

कक्कोलीफलजग्धिमुग्धविकिरव्याहारिणस्तद्भुवो-
भागाः प्रेङ्खितमातुलुङ्गवृतयः, प्रेयो विधास्यन्ति वाम् ॥ (७६)
गत्वा च तत्रैव मकरन्दमदयन्तिकागमनं यावत् स्थातव्यम् । (७७)

---

कपोलः तद्वत् अच्छपाण्डुरः निर्मलपाण्डुवर्णाः छदाः पर्णानि येषां तैः ताम्बूलीपटलैः पर्णलता-समूहैः पिनद्धाः आच्छादिताः फलिताः सञ्जातफलाः अत एव व्यानम्राः फलभारेण किञ्चिदवनताः पूगद्रुमाः गुवाकवृक्षाः येषु तथाभूताः। कक्कोलीफलानां बदरीफलानां ( कक्कोली बदरी कोली-त्यनेकार्थः ) ( कक्कोलीति पाठे तु कक्कोलीफलानां कोलफलानामित्यर्थः ) जग्धया भक्षणेन मुग्धाः मनोहराः विकिराणां पतत्रिणां ( नगौको वाजिविकिरविविष्किरपतत्रिणः इत्यमरः ) व्याहाराः लपितानि ( व्याहार उक्तिर्लपितमित्यमरः ) आतिशय्येन सन्ति एषामिति तथोक्ताः। ( अतिशयार्थे इनुप्रत्ययः, अतएव बहुव्रीहिणा तादृशार्थप्रत्यायनासम्भवान्न "न कर्मधारया-न्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकर" इत्यनुशासनविरोध इति मन्तव्यम ) तथा प्रेङ्खिता वातेन सञ्चालिता मातुलुङ्गानां कोलङ्गवृक्षाणां वृत्तिर्वेष्टनं येषु तादृशाः तद्भुवोभागा अस्मद्विहारिका-पश्चाद्वर्त्त्युपवनप्रदेशाः वां युवयोः प्रेयः प्रीतिं विधास्यन्ति जनयिष्यन्ति।

अत्र सम्भोगसाधनतया प्रसिद्धानां ताम्बूलतादीनां लाभः, पक्षिकलरवेण परस्परप्रणया-लापस्यान्यैरश्रवणं, मातुलुङ्गवेष्टनवत्त्वेनान्येषां सहसा प्रवेशस्यासम्भवः, परैरात्मनोरनवलोकनञ्च व्यज्यत इति वस्तुना वस्तुध्वनिः।

अत्र प्रथमचरणे समासगतोपमा, एवं यथायथं वृत्त्यनुप्रासच्छेकानुप्रासयालङ्कारा इति तेषां संसृष्टिः। शार्दूलविक्रीडितं वृत्तम्।

(७७) स्थातव्यमिति, तथाच मदयन्तिकामकरन्दयोरपि विवाहोपरमङ्गलाचारादिकं तत्रैव सम्पादयिष्यत इत्याशयः।

---

(৭৬) যে স্থানে গুবাকবৃক্ষসকল অতিশয় প্রিয়বিরহজনিত ঔৎসুক্য বশতঃ প্রৌঢ় কেরল দেশীয় স্ত্রীদিগের কপোলদেশের ন্যায় নির্ম্মল ও পাণ্ডুবর্ণ পর্ণযুক্ত তাম্বূললতায় পরিবেষ্টিত এবং ফলভরে অবনত, যে স্থানে বদরীফল-ভক্ষণে পক্ষিদিগের মনোহর কলরব হইতেছে ও যে স্থানে বায়ুসঞ্চালিত মাতুলুঙ্গ বৃক্ষের বেষ্টন আছে, তাদৃশ সেই উপবন ভূমিভাগ তোমাদের প্রীতি উৎপাদন করিবে।

(৭৭) এবং সে স্থানে যাইয়া মকরন্দ ও মদয়ন্তিকার গমন পর্য্যন্ত থাকিবে।

मद। [ कर्णौ पिधाय। ] अहो ! अदिक्कमो। अहो ! पमादो। सहि लवङ्गिए ! असमत्यह्मि दे मुहं पि संपदं दंसिदुं तधावि पहवामि त्ति किं पि मन्तइस्सं (द)।

लव। साधीणो दे अअं जणो (ध)।

मद। चिट्ठदु ज्जेव्व मह भादुणो दुस्सीलदा अवरिट्ठाणं अ। तुह्मेहिं ईदिसो वि सम्पदं जधा चित्तमणुवत्तनीओ जेण भत्ता एसो

(द) अहो ! अतिक्रमो। अहो ! प्रमादः। सखि लवङ्गिके ! असमर्थास्मि ते मुखमपि साम्प्रतं दर्शयितुं, तथापि प्रभवामीति किमपि मन्त्रयिष्ये।

(ध) स्वाधीनस्तेऽयं जनः।

(थ) अथ किमिति महान् वाचापराधः कृत एवेत्यर्थः। तदपराधस्य स्वरूपं दर्शयितु-माह—श्रुतमिति।

(द) कर्णौ पिधायेति अश्राव्यत्वद्योतनार्थं हस्ताभ्यां कर्णावाच्छाद्येत्यर्थः। अहो इयं खेदद्योतकम्। अतिक्रमः मद्भ्रातृकृतं मालतीमर्यादालङ्घनम्। प्रमादः मद्भ्रातुरनवधानता। विशुद्धचरित्रां सद्वंशोत्पन्नां सरलां मालतीं प्रत्येवमसङ्गतवाक्यप्रयोगादिति भावः। असमर्था-स्मीति, भ्रातृकृतमपराधमाकलयन्ती तव स्थाने मुखप्रदर्शनमपि लज्जाकरं मन्ये इत्यर्थः। प्रभवामि परमप्रीतिवशेन त्वयि मत्प्रभुत्वमस्ति इति हेतोः किमपि मन्त्रयिष्ये सखिभावेन किञ्चित् कथयिष्यामीत्यर्थः।

(ध) अयं मल्लक्षणः जनः ते तव स्वाधीनः सखिभावेन वशीभूतः तथाच यथेच्छ-मभिधातुं शक्नोषीति भावः।

(थ) বৃদ্ধ। আর কি বলিব? "তোমার কুলটা তোমা দ্বারা সম্প্রতি আমার কোনও প্রয়োজন নাই" এই কথা বলিতে আমরাই শুনিয়াছি।

(দ)। মদ। ( কর্ণ আচ্ছাদন করিয়া ) অহো! ( আমার ভ্রাতার ) অতিক্রম, অহো! ( আমার ভ্রাতার ) অনবধানতা। সখি লবঙ্গিকে! সম্প্রতি আমি তোমাকে মুখ দেখাইতেও অসমর্থ, তথাপি পরম প্রীতিবশে তোমার প্রতি আমার প্রভুত্ব আছে বলিয়াই কিছু বলিতেছি।

(ধ) লব। আমি তোমার স্বাধীন ( অতএব যাহা ইচ্ছা তাহাই বলিতে পার )।

अलीअं मालदिं जाणीमो। केण वा कठोरकेदअगब्भविब्भमाव-अवदोलणमिलाणिदसुंदरत्तणविसेसं माहवसहत्थगिम्मविदवउला-वलीविरइदकण्ठावलम्बणेत्तसंधारिदजीवणं मालदीए माहवस्स अ पभातचन्दमण्डलापाण्डुरपरिक्खामरमणीअदंसणं ण विभाविदं सरीरं। किं च तद्दिअसे कुसुमाअरुज्जाणपेरन्तरच्छामुहसमागमे सविब्भमसमुल्लसिदकोदूहलुप्फुल्लपसरन्तणअणुप्पलबहलविलासमसिण-सञ्चारचारुतारआविराअन्ताविब्भमा अणङ्गणट्टाआरिअसञ्चारो-

---

निर्व्वर्त्तितसुन्दरत्वविशेषं माधवस्वहस्तनिर्म्मितबकुलावलीविरचितकण्ठावलम्बनमात्रसन्धारितजीवनं मालत्या माधवस्य च प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामरमणीयदर्शनं न विभावितं शरीरम्। किञ्च। तद्दिवसे कुसुमाकरोद्यानपर्य्यन्तरथ्यामुखसमागमे सविभ्रमोल्लसितकौतूहलोत्फुल्ल-प्रसरन्नयनोत्पलबहलविलासमसृणसञ्चारचारुतारकाविराजमानविभ्रमा अनङ्गनाट्याचार्य्यसञ्चा-

---

विरहजनितदौर्ब्बल्येन निर्व्वाहितः सम्पादितः सुन्दरत्वविशेषः सौन्दर्य्यातिशयः यस्मिन् तथा-भूतम्, तथा माधवस्य स्वहस्तनिर्म्मितया बकुलावल्या बकुलकुसुमस्रजा विरचितः कृतः यः कण्ठा-वलम्बः गलदेशालम्बनं, तन्मात्रेण सञ्चारितं जीवनं येन तथाभूतं मालत्याः शरीरं, प्रभातचन्द्र-मण्डलवत् आपाण्डुरं ईषत् पाण्डुवर्णपरिणामं सततदुश्चिन्तया क्षमतापन्नं रमणीयदर्शनं मनोज्ञा-वलोकनञ्च तथयोक्तं माधवस्य च शरीरं केन वा जनेन न विभावितं न लक्ष्यीकृतं अपि तु सर्व्वैरेव लक्ष्यीकृतमित्यर्थः। तयाच कथं गोपायसीति भावः।

किञ्चेति अपिचेत्यर्थकम्। कुसुमाकरोद्यानपर्य्यन्तं मदनोद्यानसीमकं यत् रथ्यामुखं तत्र समागमे उभयोः सम्मेलने सति सविभ्रमं सविलासं यथा स्यात्तथा उल्लसितयोः उच्छ्वसितयोः, कौतूहलेन आनन्देन उत्फुल्लयोः विकसितयोः प्रसरतोः दर्शनीयस्थानं गच्छतोश्च नयनोत्पलयोः बहलविलासेन निरतिशयविभ्रमेण मसृणसञ्चारेण निर्म्मलसञ्चालनेन च चारुमनोहरतारके

---

জীবনকে মাধবৈকময় বলিয়া জানি। পরিণত কেতকীকুসুমের অভ্যন্তর-দেশবৎ পাণ্ডুবর্ণ হস্তপদাদি অবয়বের দৌর্ব্বল্য বশতঃ যাহার সৌন্দর্য্যবিশেষ সম্পাদিত হইয়াছে, এবং কেবল মাধবের স্বহস্তনির্ম্মিত বকুলমালার কণ্ঠাবলম্বন দ্বারাই যে জীবন ধারণ করিয়াছে, তাদৃশ মালতীর শরীর এবং প্রভাত চন্দ্র-মণ্ডলের ন্যায় ঈষৎ পাণ্ডুবর্ণ ক্ষীণও মনোজ্ঞদর্শন মাধবের শরীর কেনা লক্ষ্য

वदेसणिव्वाविअविअट्टसुहसङ्कुरा तुए वि ण णिव्वविदा इमाणं दिट्ठिसन्देदा। किं च। तस भादुणो दाणवुत्तन्तं सुणिअ तक्खणुच्छलिदगम्भीरावेअव्वइअरतिलाअन्तदेहसोहाणं उव्वत्तमाण-मूलं विअ ण लक्खिदं दिअअं। किं च। एदं पि अवरं सुमरिदं मए (भ)। (९८)

---

वादेशनिर्वापितविहितमुखलहुरालवादपि न निर्वापिता अस्माकं दृष्टिसन्देहाः। किं च। तव भ्रातुर्दानवृत्तान्तं श्रुत्वा तत्क्षणोच्छलितगम्भीरावेगव्यतिकरलक्ष्यमाणदेहसोभानामुद्वर्तमानमूलमिव न लक्षितं हृदयम्। किं च एतदपरं स्मृतं मया।

लव। सहि! कदमो उण सो महाणुहावोत्ति विसुमरिदं मए (र)।

मद। सहि सुमर सुमर जेण तस्सिं दिअसे विअडदुट्ठसावदावदेसकालगोअरं गदा असरणा तक्कालसंणिहिदेण जीविदप्पदाइणा पीवरभुअत्थम्भेण णिक्कारणबन्धवेण सअलभुवणेक्कसारणिअदेहोवहार-साहसं कदुअ परिरक्खिदम्हि। जेण अ दिढदाढाविदारिअविअड-मंसलुत्थाणपरिणाहिवक्खत्थलेण जरठज्जरिदजवापीडहारिणा

---

(र) सखि कतमः पुनः स महानुभाव इति विस्मृतं मया।

(ल) सखि! स्मर स्मर येन तस्मिन् दिवसे विकटदुष्टश्वापदापदेशकालगोचरं गता अशरणा तत्कालसन्निहितेन जीवितप्रदायिना पीवरभुजस्तम्भेन निष्कारणबान्धवेन सकलभुवनैक-सारनिजदेहोपहारसाहसं कृत्वा परिरक्षितास्मि। येन च दृढदंष्ट्राविदारितविकटमांसलोत्तान-

---

(र) मालतीमाधवानुरागकथालोचनं स्मारयितुं प्रकृतं मकरन्दं प्रति मदयन्तिकाया अनुरागप्रकारं तन्मुखादेव परिज्ञातुञ्च कृती सत्यामपि विस्मृतिं प्रकटयति—सखीत्यादिना।

(ल) सखीति। विकटः भीषणः दुष्टः खलस्वभावः यः श्वापदः हिंस्रः स एव व्यपदेशः छद्म तस्य तदाकृतस्य कालस्य यमस्य यमसदृशव्याघ्रस्येत्यर्थः, गोचरं हिंसाप्रवृत्तिविषयतां गता प्राप्ता, अशरणा रक्षकहीना, अहमिति शेषः! तत्कालसन्निहितेन शार्दूलाक्रमण-कालनिकटवर्त्तिना, पीवरः स्थूलः भुजः बाहुः स्तम्भ इव यस्य तथाभूतेन, निष्कारणबान्धवेन निर्निमित्तसुहृदा येन महानुभावेन सकलभुवनेषु त्रिलोकेषु एकः अद्वितीयः सारः सर्व्वोत्कृष्ट-निदानत्वात् देहः यो निजदेहः, तस्य उपहारे व्याघ्रायार्पणे साहसं कृत्वा निजशरीरात्यन्त-सम्बन्धेऽपि तव सन्देहत्वेऽत्यर्थः परिरक्षिता व्याघ्राक्रमणादुद्धारिता। दृढदंष्ट्राभिः कठिन-दशनैः विदारितं छिन्नं अत एव विकटं भयङ्करमपि मांसलं स्थूलं उत्तानं उन्नतं

---

(র) লব। সখি! সেই মহানুভব কে ইহা আমি বিস্মৃত হইয়াছি।

(ল) মদ। সখি! সেই দিনে ভীষণ দুষ্ট হিংস্র জন্তুরূপধারী যমের হিংসাবিষয়ীভূত রক্ষকহীন আমাকে ——— সন্নিহিত স্থূলবাহুস্তম্ভশালী জীবনদাতা যেই নিষ্কারণ বান্ধব সকলভুবনের একমাত্র সারভূত নিজ দেহের উপহাররূপ সাহসাপরাধ করিয়া রক্ষা করি কঠিন দন্ত বিদারিত বিকট

कारुणीक्कमणीण मम किदे विसह्रिदा अतिदुट्ठसद्दूलणहसिहावज्जप्पहारा मारिदो अ सो दुट्ठसावदमहारक्खसो त्ति (ल)। (२२)

लव। हुं मअरन्दो (व)

मद। [सानन्दम्।] पिअसहि! किं किं भणासि (श)

लव। णं भणामि मअरन्दो त्ति (ष)।

---

परिणाहिवक्षःस्थलेन जरठजर्जरितजवापीड़हारिणा करुणैकमनसा मम कृते विसोढा अतिदुष्टशार्दूलनखशिखावज्रप्रहारा मारितश्च स दुष्टश्वापदमहाराक्षस इति।

(व) हुं मकरन्दः।

(श) प्रियसखि! किं किं भणसि।

(ष) ननु भणामि मकरन्द इति।

---

परिणाहि विशालञ्च वक्षःस्थलं यस्य तथाभूतेन, अत एव जरठं कठिनं जर्ज्जरितं छिन्नं भिन्नं जवापीड़ं जवाकुसुमशेखरं हरति रक्तकत्वात् समीकरोतीति तथोक्तेन करुणा दयैव एका मनसि यस्य तथाभूतेन (अन्यथा निःसम्पर्कीया ममोद्धारार्थमेतावत् कष्टाङ्गीकारासम्भवा इति भावः) येन अतिदुष्टशार्द्दूलस्य नखशिखा नखराग्रभागा एव वज्राः तीक्ष्णकठिनत्वात् कुलिशानि तेषां प्रहाराः आघाताः मम कृते मदर्थे विषोढ़ाः। दुष्टश्वापद एव महाराक्षसः स मारितश्च येन, तं महापुरुषं स्मर स्मर इत्यर्थः।

(व) हुमिति स्मृतिद्योतकमव्ययम्। (हुं स्मृतावप्यपाकृताविति मेदिनी)

(श) सानन्दमिति, प्रियतमनामश्रवणमत्रानन्दहेतुः। तन्नामशुश्रूषाया अनिवृत्तेः साग्रहं पृच्छति—किं किमिति।

---

স্থূল, উন্নত ও বিশাল বক্ষঃস্থলশালী কঠিন ও ... শেখরতুল্য, করুণৈকমনাঃ যেই মহাপুরুষ আমার জন্য অতি ... নখরাগ্রভাগরূপ বজ্রের প্রহার সহ্য করিয়াছেন ও দু... মহারাক্ষসকে মারিয়াছেন, তাহাকে স্মরণ কর, স্মরণ ক...

(ব) লব। ঐ মকরন্দ।

(শ) মদ। (আনন্দের সহিত) প্রি...

(ষ) লব। "মকরন্দ" এই কথা বলিল...

मद [सलज्जम् ।] सहि किं मं उवहससि । णं भणामि णिव्वाव-अन्ति मं तारिसस्स अप्पणिरवेक्खव्ववसाइणो किदन्तकवलिज्जन्त-जीविद-बलामोडिअपच्चाणअण-गुरुकोपकारिणो जणस्स सङ्कधासु णामग्गहणसुमरणाइं । तधा अ सो तुए वि गाढप्पहारवेअणारम्भ-विसारिदसरीरसङ्गलिदसेअसलिलुप्पीलो मोहमउलाअन्तणेत्तकन्दोट्ठजु-अलो भूमिविलग्गितासिलदाविट्ठम्भधीरधारिदसरीरभारो पच्चक्खीकिदो

---

(स) सखि ! किं मामुपहससि । ननु भणामि निर्वापयन्ति मां तादृशस्य आत्मनिर-पेक्षव्यवसायिनः कृतान्तकवल्यमानजीवितबलात्कारप्रत्यानयनगुरुकोपकारिणो जनस्य सङ्कथासु नामग्रहणस्मरणानि । तथा च स त्वयापि गाढ़प्रहारवेदनारम्भविसारितशरीरसंगलितस्वेद-

---

साहस्यपुरःसर"मिति दर्पणलक्षणात् खेदो नाम नाट्यं । वंशस्थविलं वृत्तम्, "वदन्ति वंशस्थविलं जतौ जरा"विति लक्षणात् ।

(स) सलज्जमिति, लवङ्गिकासन्निधौ रोमाञ्चादिप्रकटनमेव लज्जाहेतुः । आत्मनिरपेक्षं आत्मरक्षणापेक्षारहितं यथा स्यात्तथा व्यवसायिनः मत्परिरक्षणोद्योगिनः, कृतान्तेन यमेन कवल्यमानस्य शार्दूलाक्रमणव्यपदेशेन ग्रस्यमानस्य जीवितस्य मम जीवनस्य बलात्कारेण बल-प्रयोगेण यत् प्रत्यानयनं प्रत्युद्धारः, तेन गुरुकं अतिमहत् उपकरोतीति तथोक्तस्य, संकथासु परस्परालापेष्वपि नामग्रहणस्मरणानि नामोच्चारणपरिचिन्तनानि निर्व्वापयन्ति सान्त्वयन्ति। तथाच तदुपकारकृतज्ञतयैव मे तन्नामश्रवणोत्सुक्यादिकं न तु तदनुरक्ततयेति त्वदीयोपहासो न युज्यत इति भावः । स्वोक्तं समर्थयितुमाह—तथाचेति । गाढ़प्रहारेण दृढ़तरनखराघातेन यो वेदनारम्भः तेन विसारितात् शून्यविषयात् ( बुद्ध्यर्थकधातोर्यथेच्छत्वेन सुखाकर्मणि क्तः ) संगलितः क्षरितः स्वेदसलिलोत्पीड़ः घर्मजलधारा यस्य तथाभूतः ! मोहेन मूर्च्छया मुकुलाय-

---

তুমি মকরন্দের কথাপ্রসঙ্গে অকস্মাৎ বিকল হইয়া রোমাঞ্চিতা হইলে কেন ? )

(ম) মদ। ( লজ্জার সহিত ) সখি ! আমাকে উপহাস করিতেছ কেন ? আত্মনিরপেক্ষভাবে আমার রক্ষণোদ্যোগ যিনি বলপ্রয়োগ দ্বারা ( শার্দূলা-ক্রমণব্যপদেশে ) যম কর্তৃক গ্রস্যমান আমার জীবনের উদ্ধার করিয়া মহা উপকার করিয়াছেন, তাদৃশ মহাপুরুষের কথাপ্রসঙ্গে নামগ্রহণ ও স্মরণ

दिउणबाहुदण्डावेढणणिअन्तिदं पिअसहि परूढसद्दूलकठोरकररुहप्पहारविअडपत्तावलीपसाहणुत्ताणवच्छथ्थलणिट्ठुरणिवेसणिसहं मं कदुअ सावेअविहुअमत्थआविद्धकबरीणिहिदकर-परिग्गहोवग्गिदुण्णमिदणिच्चल-मुहावअव-सच्छन्दविलसिदविअड्ढवअण-

(भ) द्विगुणबाहुदण्डवेष्टननियन्त्रितां प्रियसखि ! प्ररूढशार्दूलकठोरकररुहप्रहारविकटपत्रावलीप्रसाधनोत्तानवक्षःस्थलनिष्ठुरनिवेशनिःसहां मां कृत्वा सावेगविधुतमस्तकाविद्धकबरीनिहितकरपरिग्रहपुञ्जीकृतोन्नामितनिश्चलमुखावयवस्वच्छन्दविलसितविदग्धवदनकमलो वामगण्ड

---

पर्य्यस्ताभ्यां मदङ्गेषु सन्निवेशिताभ्यां लोचनाभ्यां चक्षुर्भ्यां विभावितः परिज्ञातः चित्तस्य मनसः सारः स्थिरांशः प्रकृताभिप्रायः यस्यास्तथाभूतां मां उपहसति "अयि प्रस्थानोद्यतापि कथं पुनर्लिष्ठसि" इत्यादि वाक्यावलीभिः उपहासं करोति ।

(भ) द्विगुणेति । द्विगुणाभ्यां एकैकहस्तेनैव समस्ताकलनाद्द्विगुणीकृताभ्यां बाहुदण्डाभ्यां आवेष्टनेन सम्यक् परिवेष्टनेन नियन्त्रितां आबद्धां कृतगाढालिङ्गनामिति यावत् । प्ररूढं समुत्पन्नं शार्दूलस्य व्याघ्रस्य कठोरकररुहप्रहारः दृढतरनखराघातजनितचिह्नान्येव विकटपत्रावली विकचपत्ररचनापंक्तिः सैव प्रसाधनं अलङ्कारः यत्र तादृशं उत्तानं उन्नतञ्च यत् वक्षःस्थलं तत्र निष्ठुरनिवेशेन घनसन्निवेशनेन निःसहां अवशां । सावेगं त्वरान्वितं यथा स्यात्तथा विधुतेन तच्चुम्बनादिप्रतिरोधसमीहया समान्दोलितेन मस्तकेन मदीयशिरसा आविद्धा स्खलिता या कबरी—मदीयकेशसमूहः तस्यां निहितेन केशसंयमनार्थं स्थापितेन करेण हस्तेन यः परिग्रहः मदीयकेशसमूहस्यैव ग्रहणं तेन पुञ्जीकृतैः संयमितैः केशैरित्यर्थः, उन्नामिताः किञ्चिदूर्द्धमुखीकृताः निश्चलाः केशाकर्षणजनितदुःखसम्भवेन सुखावाप्तिपारवश्येन

---

পরিজ্ঞাত হওয়ায় "এইরূপ করিও না" ইত্যাদি প্রতিকূলবাদিনী হইলেও আমাকে "গমনোদ্যতা হইয়াও কেন গেলে না ?" ইত্যাদি বাক্য দ্বারা উপহাস করিতেছিল।

(ঝ) তৎপরে দ্বিগুণীকৃত বাহুবেষ্টনে আবদ্ধ আমাকে ব্যাঘ্রের দৃঢ়তর-নখরাঘাতজনিত চিহ্নরূপ বিকচপত্ররচনাপংক্তি যাহাতে অলঙ্কাররূপে সমুৎপন্ন তাদৃশ সমুন্নত আমার বক্ষঃস্থলে গাঢ় সন্নিবেশবশতঃ (একেবারে) অবশ করিয়া (চুম্বনাদি প্রতিরোধ বাসনায়) আবেগের সহিত মস্তক সমান্দোলনে স্খলিত আমার কবরীতে বিন্যস্ত তাঁহার হস্ত দ্বারা পরিগ্রহবশতঃ আমার কেশ-

एव्वंणाम पिअसहि ! समक्खं सव्वं अणुभविअ झत्ति पड़िबुद्धा सुण्णारण्णसंणिहं पुणो वि मन्दभाइणी विभावेमि जीअलोअं त्ति (ञ)।

लव। [विहस्य।] सहि मदअन्तिए! फुडं आचक्खेहि। अध तस्सिं अवसरे सिणेहविब्भसुम्मोसहासविअसन्तवुहरचिदालोअणाणिरूविदं परिअणादो गोवणिज्जं दे णिअम्बस्स मूलं सअणिज्जपच्छदवडावारिदं भोदि किं ण वेत्ति (ट)।

---

(ञ) एवं नाम प्रियसखि! समक्षं सर्वमनुभूय झटिति प्रतिबुद्धा शून्यारण्यसन्निभं पुनरपि मन्दभाग्या विभावयामि जीवलोकमिति।

(ट) सखि मदयन्तिके! स्फुटमाचक्ष्व। अथ तस्मिन्नवसरे स्नेहविस्रम्भोन्मिषद्धासविक-

---

(ञ) एवं स्वप्नावस्थामभिधाय जागदवस्थामाह—एवमिति। एवं नाम अनेन प्रकारेण, सर्वं सुरतप्रार्थनादि क्रियाकलापं, समक्षं प्रत्यक्षं, झटिति सहसा, प्रतिबुद्धा जागरिता, मन्दभाग्या हतभागधेया अहं जीवलोकं संसारं पुनरपि शून्यारण्यसन्निभं जागरणमात्रेणैव तादृशानुभवादपि प्रियतमस्यादर्शनात् विजनकान्तारतुल्यं विभावयामि मन्ये। इति शब्दो वाक्यपरिसमाप्तिसूचकः पूर्वोक्तनिशावृत्तवर्णनान्ते इति।

(ट) सखीति। तस्मिन्नवसरे तस्मिन् स्वप्नदर्शनावसरे, स्नेहविस्रम्भेण प्रणयविश्वासेन उन्मिषन् संवर्धितः यो हासः [illegible] जनितं स्मितं तेन विकसन्ती विलास-[illegible] (सततविकसितायामत्र [illegible] इत्यर्थः) लोचनाभ्यां निरूपितं [illegible] अत एव परिजनात् परिचारिकाजनादपि गोपनीयम् (स्वप्न [illegible] भावः) ते तव नितम्ब

---

[illegible]

[illegible]

[illegible]

बुद्ध। सहि मदअन्तिए! भणिस्सं दाणिं दे किं वि जइ ण वीसासभङ्गं करेसि (ण)।

मद। सहि! किं पुणो वि पणअभङ्गेण किदावराहो अअं जणो जेण एव्वं मन्तेसि। पिअसहि! तुमं लवङ्गिआए सह सम्पदं मे हिअअं (त)।

बुद्ध। जइ दे कधं वि मअरन्दो पुणो वि दंसणपहं ओदरदि, तदो किं तुए कादव्वं (थ)।

---

(ण) सखि मदयन्तिके! भणिष्यामि इदानीं ते किमपि यदि न विश्वासभङ्गं करोषि।

(त) सखि किं पुनरपि प्रणयभङ्गेन कृतापराधोऽयं जनो, येनैवं मन्त्रयसि। प्रियसखि! त्वं लवङ्गिकया सह साम्प्रतं मे हृदयम्।

(थ) यदि ते कथमपि मकरन्दः पुनरपि दर्शनपथमवतरति, ततः किं त्वया कर्त्तव्यम्।

---

(ढ) मदेति। एवं अनेन प्रकारेण। मालत्या अपि तथाविधावस्थाया अलीकत्वादिति भावः।

(ण) बुद्धेति। विश्वासभङ्गं आत्माभिप्रायगोपनेन मयि विश्वास विच्युतिम्।

(त) मदेति। प्रणयभङ्गेन विश्वासच्छेदनेन, (प्रणयः प्रेम्णि विश्रम्भे याच्ञाप्रसरयोरपीति विश्वः) अयं—मल्लक्षणः। पुनरपीत्यनेन पूर्व्वं-कदाचिद्बुद्धरक्षितप्रणयभङ्गो मदयन्तिकया कृत इति गम्यते। हृदयं हृदयतुल्या, तथा च युवयोः सकाशेनास्ति मे किञ्चिदपि गोपनीयमिति निःसन्देहं कथयेति भावः।

(थ) वर्त्तव्यमभिधातुं भूमिकां करोति—यदीत्यादिना।

---

(ढ) मद। সখি! মালতীকে এইরূপে উপহাস করিও না।

(ণ) বুদ্ধ। সখি মদয়ন্তিকে! সম্প্রতি তোমাকে কোন কথা জিজ্ঞাসা করি (যদি আত্মভাব গোপন করিয়া) বিশ্বাস ভঙ্গ না কর।

(ত) মদ। সখি! পুনরায়ও কি বিশ্বাস ভঙ্গ দ্বারা আমি অপরাধ করিয়াছি যে, এরূপ বলিতেছ? লবঙ্গিকার সহিত তুমিই সম্প্রতি আমার হৃদয় তুল্য।

(থ) বুদ্ধ। যদি মকরন্দ কোন প্রকারে পুনরায় তোমার দর্শনপথে অবতরণ করে, তবে তুমি কি কর?

चन्दणं णिवृभच्छिअ से पादपङ्गं अवभत्थिअ मालदीए उवरि अनुउलइस्सं (य)। इति उत्थाय गन्तुमिच्छति।

मकरन्दो मुखमुद्घाट्य हस्तेन गृह्णाति। (७)

मद। सहि मालदि! विप्पवुद्धासि [विलोक्य सहर्षं ससाध्वसञ्च] अम्मो अण्णं ज्जेव्व किं पि एदं वट्टदि (र)।

मक। रम्भोरु! संहर भयं चमते विसोढु-
मुत्कम्पितं स्तनभरस्य न मध्यभागः।

---

(र) सखि मालति! विप्रबुद्धासि। अम्मो अन्यदेव किमप्येतद्वर्त्तते।

---

गोप्तृत्वानुचितत्वादाह—सपादेति। वा अथवा, सपादवन्दनं पादवन्दनेन सह यथा स्यात्तथा अभ्यर्थ्य "मालतीं प्रति सदयो भवे"ति याचित्वा, अनुकूलयिष्यामि अनुकूलं करिष्यामि।

(७) गृह्णातीति मदयन्तिकाहस्तमिति शेषः।

(र) मदेति। प्रतिबुद्धासि जागरितासि, किमित्यर्थः। चिरप्रार्थितस्य मकरन्दस्याचिन्तितोपनतं दर्शनमत्र हर्षहेतुः, तत्समक्षमेव निर्लज्जया मया गुप्तः सर्व्वो मनोभावः प्रकटीकृत इति किमयं मन्यत इति परिचिन्तनं कन्यायाः पुरुषस्पर्शस्यानौचित्यञ्च भयहेतुः। "अम्मो" इति विस्मयद्योतकमव्ययम्। अन्यदेव मदवगतान्मालत्यवस्थानाद्भिन्नमेव, किमपि अनिर्व्वचनीयं एतन्मकमाराध्यस्य मकरन्दस्यावावस्थानं।

(८) रम्भोर्व्विति। हे रम्भोरु! कदलीस्तम्भाकारोरुदेशि! भयं साध्वसं संहर मुञ्च।

---

বন্দনে অভ্যর্থনা করিয়া মালতীর উপরে অনুকূল করিব। (এই কথা বলিয়া উঠিয়া যাইতে ইচ্ছা করিল)।

(৭) (মকরন্দ মুখ উদ্‌ঘাটিত করিয়া হস্তদ্বারা মদয়ন্তিকার হস্তধারণ করিল)।

(র) মদ। সখি মালতি! জাগরিতা হইয়াছ? (দেখিয়া হর্ষ ও ভয়ের সহিত) অহো আমার জ্ঞানের অতীত অনির্ব্বচনীয় (মকরন্দের অবস্থানরূপ) ব্যাপার বর্ত্তমান।

(৮) মক। অয়ি! রম্ভোরু! ভয় পরিত্যাগ কর। যেহেতু (অত্যন্ত

अव। तुह ज्जेव्व सवधोवसासेण एसा लवङ्गिअं सुमरिअ, ताए पउत्तिणिमित्तं उत्तम्मदि। (च)

माध। ननु इदानीमेव मया कलहंसकः प्रहितः, प्रच्छन्नः सन्निपत्य नन्दनावासप्रवृत्तिमुपलभस्वेति। [साशंसं।] अवलोकिते! अपि नाम बुद्धरक्षिताप्रयत्नः सफलोदर्क एव मदयन्तिकां प्रति स्यात्? (१८)

अव। कुदो सन्देहो महाणुभाअस्स? महाभाअ! पढमं ज्जेव्व सद्दूलणहरालङ्किदस्स मअरन्दस्स माहविरासवसवं णिवेद-

---

(च) तवैव शपथोपन्यासेन एषा लवङ्गिकां स्मृत्वा तस्याः प्रवृत्तिनिमित्तमुत्ताम्यति।

(छ) कुतः सन्देहो महानुभावस्य? महाभाग! प्रथममेव शार्दूलनखरालङ्कृतस्य

---

(च) शपथोपन्यासेन "शापितासी"त्यादि पूर्व्वोक्तशपथप्रयोजकवचने लवङ्गिकाया नामाभिधानेन, तस्याः लवङ्गिकायाः प्रवृत्तिनिमित्तं मकरन्देन सह गतायास्तस्याः किं वृत्तमिति वृत्तान्तप्राप्त्यर्थं, उत्ताम्यति उत्कण्ठिता भवति।

(१८) माधेति। प्रच्छन्नः गुप्तः अन्यैरपरिज्ञात इति यावत्, सन्निपत्य गत्वा नन्दनावास-प्रवृत्तिं नन्दनवासगृहस्य वृत्तान्तं लभस्व जानीस्व। तथाच सत्वरमेव कलहंस आगत्य तद्वृत्तान्तं ज्ञापयिष्यतीति भावः। सफलः मकरन्देन सह मदयन्तिकाया निर्गमनरूपेणास्मदभिलषित-फलेन सहितः उदर्कः उत्तरफलं यस्य तथाभूतः बुद्धरक्षिताप्रयत्नः मदयन्तिकां प्रति स्यात् भवेत् अपिनाम किं? बुद्धरक्षिताप्रयत्नेन मदयन्तिका मकरन्देन सह पुरान्निःसरेत् किमित्यर्थः?

(छ) अवेति। महानुभावस्य भवतः, कुतः सन्देहः मकरन्देन सह मदयन्तिकाया-

---

(চ) অব। তোমারই "শাপিতাসি" ইত্যাদি বাক্যে নামোচ্চারণ বশতঃ লবঙ্গিকাকে স্মরণ করিয়া তাহার সংবাদ পাওয়ার জন্য মালতী উৎকণ্ঠিতা হইয়াছে।

(১৮) মাধ। সম্প্রতিই আমি কলহংসকে পাঠাইয়াছি যে, গোপনে যাইয়া নন্দনের বাসগৃহের বৃত্তান্ত জানিয়া আস। (আশংসার সহিত) অবলোকিতে! মদয়ন্তিকার প্রতি বুদ্ধরক্ষিতার প্রযত্ন উত্তরকালে মকরন্দের সহিত মদয়ন্তিকার আগমনরূপ আমাদের অভিলষিত ফলশালী হইবে ত?

प्रेम्णा मद्ग्रथितेति या प्रियसखीहस्तोपनीतानया,
विस्तारिस्तनकुम्भकुड्मलभरोत्सङ्गेन सम्भाविता ।
सम्प्राप्ते त्वथ पाणिपीड़नविधौ मां प्रत्यपेताशया
या मय्येव लवङ्गिकेत्यवगते सर्वस्वदायीकृता ॥ (२०)

(२०) मालाया वैशिष्ट्यं दर्शयति—प्रेम्णे त्यादिना। या वकुलमाला अनया मालत्या मद्ग्रथिता मयैव सगुणीकृत्य विरचिता इति हेतोः प्रियसख्याः लवङ्गिकायाः हस्तेन उपनीता समानीता प्रेम्णा अनुरागेण विस्तारिस्तनकुम्भकुड्मलभरोत्सङ्गेन विशालभारवत् कुचकलश-कलिका क्रोड़ेन गले विधारणात् लम्बमानतया विशालकुचोपरिसंस्थापनेनेति यावत्, सम्भाविता गौरवं प्रापिता। तु किन्तु अथ अनन्तरं पाणिपीड़नविधौ नन्दनेन सह विवाहोद्योगे सम्प्राप्ते नन्दनानुरोधादुपगते सति मां प्रत्यपेताशया मत्प्राप्तौ हताशया सत्या लवङ्गिकेत्यवगते लवङ्गिकेङ्गितानुसारेण तत्क्षणपरित्यक्ततदीयस्थाने दण्डायमानतया लवङ्गिकात्वेनैवावधारिते इत्यर्थः (पश्चाद्‌गतमालाप्रदानवृत्तान्तोऽवानुसन्धेयः) मय्येव या वकुलमाला सर्वस्वदायीकृता सर्वस्ववदर्पिता। (दीयत इति दायः अपादिकारात् कर्म्मणि घञ्, सर्वस्वमिव दायः सर्वस्वदायः, असर्वस्वदायः सर्वस्वदायः कृत इति सर्वस्वदायीकृता) तयाचेयमेव वकुलमाला मम जीवितादप्यधिकेति मदयन्तिकालाभसम्पादननिवेदकाय पारितोषिकत्वेन मया दास्यत इति भावः।

अत्र स्तनयोः स्थूलत्वेन कुम्भसादृश्यं वर्द्धिष्णुतया च कुड्मलसादृश्यमिति लुप्तोपमालङ्कारः। शार्द्दूलविक्रीड़ितं वृत्तम्।

অবলোকন করিয়া) মালতীর প্রথম দর্শনজনিতানুরাগের সাক্ষীভূত মদনো-দ্যানের অলঙ্কারস্বরূপ ও শ্রীযুক্ত বকুলবৃক্ষের কুসুমনির্ম্মিত এই মালা আছে।

(২০) সেই বকুলমালা আমার গ্রথিত বলিয়া এই মালতী কর্ত্তৃক প্রিয়-সখী লবঙ্গিকাহস্তে সমানীত হইয়া অনুরাগবশতঃ বিশালভারবৎ স্তনকুম্ভ-কুড্মলোৎসঙ্গ দ্বারা গৌরবান্বিত হইয়াছিল। কিন্তু অনন্তর নন্দনের সহিত বিবাহের উদ্যোগ উপগত হইলে আমার প্রাপ্তি বিষয়ে হতাশা মালতী কর্ত্তৃক লবঙ্গিকারূপে অবধারিত আমাতেই (আবার) যে বকুলমালা সর্ব্বস্ববৎ অর্পিত হইয়াছিল। (আমার জীবনাধিক সেই বকুলমালাই পারিতোষিক প্রদান করিব)।

पराणीअं पविट्ठो, तदो पडिणिउत्तह्मि मन्दभाइणी, सुणामि अ घरे घरे गुणाणुराअकाअरसस पौललोअस्स, "हा महाणुभाअ! हा माहव! हा मअरन्द! हा साहसिअ! त्ति परिदेवणाओ, किल एदाणं मन्तिधीआण विप्पलम्भवुत्तन्तं सुणिअ, सञ्जाअमच्छराधिक्खेवो, तक्खणविसज्जिदपौढ़पाइकणिवहो चन्दादवेण सोहसिहरट्ठिदो पेक्खदित्ति मन्तीअदि। (भ)

---

साहसिक!" इति परिदेवनाः, महाराजोऽपि किलैतयोर्मन्त्रिदुहित्रोर्विप्रलम्भवृत्तान्तं श्रुत्वा, सञ्जातमत्सराधिक्षेपस्तत्क्षणविसर्जितप्रौढपदातिनिवहश्चन्द्रातपेन सौधशिखरस्थितः प्रेक्षत इति मन्त्र्यते।

---

निवृत्ताऽस्मि प्रत्यागताऽस्मि, मन्दभागिनीति अहमिति शेषः, मालतीवार्त्ताप्रदानालाभनैर्थ्यनैवात्र मन्दभागिनीत्वाभिधाने हेतुः। परिदेवनाः खेदोक्तीः। विप्रलम्भवृत्तान्तं प्रवञ्चनावार्त्तां, सञ्जातमत्सराधिक्षेपः समुद्भूतविद्वेषतिरस्कारः, तत्क्षणे तद्वार्त्ताकर्णनाक्षणे विसर्जितः मकरन्दोवरोधार्थंप्रेरितः प्रौढ़ः दक्षः पदातिनिवहः पदातिसैन्यसमूहो येन तथाभूतः। चन्द्रातपेन चन्द्रालोकेन (विरहित्वेन सन्तापकतया आतपत्वाभिधानम्) परिशोभित इति शेषः, (तथाचाना-वृतस्थानावस्थित इति भावः) प्रेक्षते माधवमकरन्दाभ्यां सह स्वकीयसैन्यानामाहवं अवलोकयति। इति मन्त्र्यते पुरवासिभिः परस्परमाभाष्यते। इति च श्रृणोमीत्यर्थः।

---

বিশাল উরুদণ্ড দ্বারা নিরতিশয়রূপে ধাবিত হইয়া শত্রু-সৈন্যমধ্যে প্রবিষ্ট হইয়াছেন। মন্দভাগিনী আমিও তৎপরে প্রতিনিবৃত্তা হইয়া আসিলাম, এবং (আসিতে আসিতে "হা মহাশুভব মাধব! হা মকরন্দ! হা সাহসিক! ইত্যাদিরূপ গুণানুরাগ কাতরপুরবাসিদিগের বিলাপ শুনিলাম। আরও শুনিলাম "মহারাজও এই মন্ত্রী ও দুহিতার প্রতারণা বৃত্তান্ত শুনিয়া বিদ্বেষ ও তিরস্কারের উদ্ভূতিবশতঃ তৎক্ষণাৎ সুদক্ষ সৈন্যসমূহ পাঠাইয়া চন্দ্রালোকে বিরাজিত ও প্রাসাদের ছাদের উপরে সংস্থিত হইয়া মাধব ও মকরন্দের সহিত স্বীয় সৈন্যের যুদ্ধ দেখিতেছেন" এই কথা পুরবাসীরা বলিতেছে।

ततः प्रविशति माधवो मकरन्दश्च। (१५)

सकरुणं निश्वस्य।

मक। न यत्र प्रत्याशामनुपतति नो वा रहयति,
प्रविच्छिन्नं चेतः प्रविशति च मोहान्धतमसम्।
अकिञ्चित्कुर्वाणाः पशव इव तस्या वयमहो
विधातुर्वामत्वाद्विपदि परिवर्त्तामह इमे॥ (१६)

---

वन्निये"त्यादिना। भाविकथांशस्य च निदर्शनात् शुद्धत्वञ्च नध्यनैकपात्रप्रयुज्यत्वादिति मन्तव्यम्।

(१६) न यत्रेति। चेतः अस्माकं मनः (कर्त्तृ) यत्र विपदि प्रत्याशां मालतीप्राप्तिविषयिणीमाशां न अनुपतति न अधिगच्छति, अनेकान्वेषणेनापि तद्वार्त्ताया अप्यनधिगमादिति भावः। नो वा रहयति मालतीप्राप्तिप्रत्याशां न वा परित्यजति, दुरतिक्रमाघोरघण्टाक्रमणादितोऽपि परिक्रमणदर्शनादिति भावः। (परन्तु) प्रविच्छिन्नं मालतीलाभार्थमतीव चञ्चलं सत् मोह एव किङ्कर्त्तव्यताविमूढत्वमेव अन्धतमसं गाढतरान्धकारः तत् प्रविशति। किङ्कर्त्तव्यमित्यवधारयितुं न पारयतीत्यर्थः। (अहो इति खेदे) इमे वयं विधातुर्दैवस्य वामत्वात् प्रातिकूल्यात् पशव इव (आहारनिद्रादिरूपसाधारणधर्म्ममात्रशालित्वादिति भावः) तस्या मालत्याः अकिञ्चित्कुर्वाणाः विपत्प्रतीकारानुरूपं किञ्चिदप्यकुर्वाणा इत्यर्थः, विपदि मालतीसम्बन्धानाप्तिरूपविपत्तौ परिवर्त्तामहे तिष्ठामः। तथाच दैवप्रातिकूल्येनैव मालत्याः किञ्चित् कर्त्तुं वयमसमर्थाः, न तु पुरुषकारविरहादिति भावः।

अत्र चेत इत्येककर्त्तृकारकेण अनुपतत्यादीनामनेकक्रियाणामन्वयाद्दीपकालङ्कारः, पशव इवेत्युपमालङ्कारश्च, तयोः परस्परनैरपेक्ष्येण संसृष्टिः। शिखरिणीवृत्तम्।

---

(১৪) সৌদামিনীর প্রস্থান। (এই অংশের নাম বিষ্কম্ভক)

(১৫) তৎপরে মাধব ও মকরন্দের প্রবেশ।

(১৬) মক। (সকরুণ নিশ্বাস ফেলিয়া) যে বিপদে আমাদের মন মালতীর প্রত্যাশা অবলম্বনও করিতে পারিতেছে না, একেবারে পরিত্যাগও করিতে পারিতেছে না, পরন্তু অত্যন্ত চঞ্চল হইয়া কিংকর্তব্যবিমূঢ়তারূপ গাঢ় অন্ধকারে প্রবিষ্ট হইতেছে। অহো দৈবপ্রতিকূল্য বশতঃ আমরা পশুর ন্যায় মালতীর কোনই উপকার করিতে না পারিয়া এই বিপদে অবস্থিত আছি।

माध। हा प्रिये मालति! क्वासि, कथमविज्ञाततत्त्वम् अद्भुततमं झटिति पर्य्यवसितासि, ननु अकारणे! प्रसीद सम्भावय माम्। (१७)

प्रियमाधवे! किमसि मय्यवत्सला
ननु सोऽहमेव यमनन्दयत् पुरा।
अयमुद्गृहीतकमनीयकङ्कण-
स्तव मूर्त्तिमानिव महोत्सवः करः॥ (१८)

वयस्य मकरन्द! दुर्लभः पुनर्जगति तावतः स्नेहस्य सम्भवः। (१९)

---

(१७) साधेति। अविज्ञाततत्त्वं अनभिज्ञतयाज्ञातं अतएव अद्भुततमं आश्चर्य्यतमं यथा स्यात्तथा पर्य्यवसितासि विनाशितासि।

(१८) प्रियेति। प्रियः माधवो यस्यास्तत्सम्बुद्धौ। मालति! मयि किं किमर्थं अवत्सला स्नेहरहिता असि। [illegible] भावः। कुतं स्नेहं धारयितुमाह—नन्विति। अहं स एव माधवः, पुरा पूर्वं [illegible] [illegible] धृतः, [illegible] मूर्त्तिमान् धृतविग्रहः महोत्सवः आनन्द इव तवायं करः [illegible] यं समनन्दयत् समतोषयत्। [illegible] कर्त्तुमिति भावः।

अत्र मूर्त्तिमान् महोत्सव इव कर इति [illegible] अलङ्कारः। मञ्जुभाषिणी वृत्तम्।

अत्र च [illegible]

(१९) तावत इति तावत्परिमितस्येत्यर्थः।

---

(১৭) মাধ। হা প্রিয়ে! মালতি! তুমি কোথায়? [illegible]

(১৮) [illegible]

सरसकुसुमस्निग्धैरङ्गैरनङ्गमहाज्वर-
श्चिरमविरतोन्माथी सोढ़: प्रतिक्षणदारुण: ।
तृणमिव तत: प्राणान्मोक्तुं मनो विधृतं तया,
किमपरमतो निर्व्यूढ़ं यत्करार्पणसाहसम् ॥ (२०)

अपिच । मयि विगलितप्रत्याशत्वाद्विवाहविधे: पुरा,
विकलकरणैर्मर्मच्छेदव्यथाविधुरैरिव ।

---

(२०) स्नेहस्यापरिमितत्वं समर्थयितुमाह—सरसेति । तया मालत्या सरसानि सरसानि अभिनवानीति यावत्, यानि कुसुमानि पुष्पाणि तद्वत् स्निग्धै: सुकुमारै: अङ्गै: शरीरै: अविरतोन्माथी अनवरतोन्मथनकारी प्रतिक्षणदारुण: अत्यन्तातिभीषण: न तु साधारणज्वरवत् सविराम इत्यर्थ:, अनङ्गमहाज्वर: कामजमहासन्तापः चिरं बहुकालं सोढ़: मत्प्राप्तिप्रत्याशया सह्यः कृत: । तत: तदनन्तरं नन्दनेन सह विवाहोद्योगे सति मत्प्राप्तिप्रत्याशाविगमानन्तरमित्यर्थ:, प्राणान् तृणमिव मोक्तुं परित्यक्तुं मनश्चित्तं विधृतं नियोजितम् । मरणं निश्चितमित्यर्थ: । ततश्च यत्करार्पणसाहसं आत्मनैव पाणिदानसाहसं निर्व्यूढ़ं कुलकुमार्य्या सत्या पित्रादनपेक्षया निर्व्वाहं प्रापितं, अत: अपरं इतोधिकं किं स्नेहनिदर्शनं कथ्यतामिति शेष: । अपरिमितस्नेहं विना पूर्व्वोक्तमेकमपि कुलकुमार्य्या सम्पादयितुं न शक्येत इति सर्व्वथैव जगति तादृशस्नेहस्य सम्भवो दुर्लभ इति भाव: ।

अत्र प्रथमपादे लुप्तोपमा, तृतीयपादे च श्रौतोपमालङ्कार: इत्यनयो: परस्परनिरपेक्षत्वे न सङ्कर: । हरिणीवृत्तम् ।

(२१) मयीति । हे सखे ! मकरन्द ! असौ मालती विवाहविधे: पुरा मया सह गन्धर्व्व-

---

(১৯) বয়স্য মকরন্দ । তাদৃশ অপরিমিত স্নেহের সম্ভব জগতে পুনরায় দুর্ল্লভ ।

(২০) অভিনব কুসুমের ন্যায় সুকুমার-অঙ্গবিশিষ্টা এই মালতী ( আমার প্রাপ্তি প্রত্যাশায় ) অবিরত উন্মথনকারী ও সর্ব্বদা অত্যন্ত ভীষণ কামজ্বর বহুকাল সহ করিয়াছিল । তৎপরে আমার প্রাপ্তি প্রত্যাশা তিরোহিত হইলে তৃণের ন্যায় প্রাণ পরিত্যাগ করিতে সঙ্কল্প করিয়াছিল । তৎপরে যে স্বয়ংই পাণিদানরূপ সাহস নির্ব্বাহিত করিয়াছে, ইহা হইতে অধিক স্নেহের নিদর্শন কি

स्मरसि रुदितैः स्नेहाकूतं तथा व्यतनोदसा-
वहमपि यथाभूवं पीडातरङ्गितमानसः ॥ (२१)

[ सावेगम् । ] अहो नु खलु भोः ! (२२)

दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते,
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्,
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ (२३)

---

विवाहानुष्ठानात् प्राक् मयि विगलितप्रत्याशत्वात् नन्दनेन सह विवाहावधारणेन मदयन्ती हताश-त्वात् मद्विच्छेदव्यथया हृदयद्विधाकरणपीडया विधुरैः दुःखितैरिव विकलैः स्वस्वविषयदानविमुखैः करणैः इन्द्रियैः उपलक्षिता असौ रुदितैः रोदनैः तथा तत्प्रकारं निरतिशयमित्यर्थः, स्नेहाकूतं मद्विषयकानुरागाभिप्रायं व्यतनोत् विस्तारितवती, यथा येन स्नेहाकूतेन अहमपि पीडया तदीय-व्यथानुभवजनितक्लेशेन तरङ्गितं चञ्चलं मानसं चित्तं यस्य, तथाभूतः अभूवम् इति त्वं स्मरसि किमित्यर्थः । तदाच स्मरति तादृशस्नेहस्य सम्भवः सुदुर्लभ एवेत्यत्र नास्ति वक्तव्यमिति भावः ।

अत्र द्वितीयचरणे वाक्यानुप्रासालङ्कारः । हरिणीवृत्तम् ।

(२२) सावेगमिति, तत्प्रकारस्मरणजनितातिशयशोकावेगेन सहितं यथा स्यात्तथेत्यर्थः । "अहो नु खलु भोः" इत्येकमेवातिविषादसूचकमव्ययम् ।

(२३) दलतीति । गाढः दृढः उद्वेगः मालतीविरहजनितक्लेशः यत्र तथाभूतं हृदयं दलति विच्छिन्नं भवति, तु किन्तु द्विधा न भिद्यते द्विधाविभक्तं न भवति, तथात्वे दुःखावसान-सम्भवादिति भावः । विकलः विरहविह्वलः कायः शरीरं मोहं मूर्च्छां वहति लभते, किन्तु चेतना चैतन्यं न मुञ्चति त्यजति न जहाति । तथात्वेऽपि पुनर्दुःखानुभवासम्भवादिति भावः । अन्तर्दाहः विरहजनिताभ्यन्तरीयशोकसन्तापः तनुं देहं ज्वलयति सन्तापयति, किन्तु

---

(২১) হে সখে! আরও বলি, আমার সহিত পূর্ব্ববিবাহ নিষ্পন্ন হইবার পূর্ব্বে (নন্দনের সহিত বিবাহাবধারণে) আমার প্রতি প্রত্যাশার বিগমবশতঃ মর্ম্মচ্ছেদ পীড়ায় দুঃখিত হইয়াই যেন স্ব স্ব বিষয় গ্রহণে বিমুখ ইন্দ্রিয়বিশিষ্ট এই মালতী রোদনদ্বারা সেইরূপ স্নেহাভিপ্রায় প্রকাশ করিয়াছিল। যদ্বারা আমিও তদীয় ব্যথানুভবপীড়ায় চঞ্চলমনা হইয়াছিলাম, ইহা তোমার স্মরণ আছে কি ?

(২৩) গাঢ় উদ্বেগশালী আমার হৃদয় বিদীর্ণ হইতেছে, কিন্তু দুইভাগে বিভক্ত হইতেছে না। বিরহবিহ্বল শরীর মূর্চ্ছা লাভ করিতেছে, কিন্তু একেবারে

मक। वयस्य माधव! निरवग्रहं दहति दैवमिव दारुणो विवस्वान्, इयञ्चातिशरीरावस्था, तत् अस्य पद्मसरसः परिसरे मुहूर्त्तमास्यताम्। अत्र हि—(२४)

उन्नालबालकमलाकरमाकरन्द-
निष्यन्दसंवलितमांसलगन्धबन्धुः।

---

भस्मसात् भस्मीभूतां न करोति, तथात्वेऽपि दाह्याभावेन शोकाग्ने र्निर्व्वाणसम्भवादिति भावः। तथा मर्म्मच्छेदी हृदयविदारणकारी विधिः दैवं प्रहरति प्रहारं करोति, किन्तु जीवितं जीवनं न कृन्तति न विनाशयति, तथात्वेऽपि दुःखोपशमसम्भवादिति भावः। तथाच मरणं विना विरहदुःखनिवारणोपायो नास्ति, तन्मरणमपि मे न सम्पद्यत इत्याशयः।

अत्र विच्छिन्नत्वमोहप्राप्तिदेहज्वलनप्रहाररूपकारणानां सत्त्वेऽपि द्विधाविभक्तत्वचैतन्यपरित्यागभस्मीभूतत्वविनाशरूपकार्य्याणामभावात् चत्वारो विशेषोक्त्यलङ्कारास्तेषाञ्च मिथो नैरपेक्षेण संसृष्टिः। हरिणीवृत्तम्।

"मनर्थेष्टानुत्पन्नः श्रमः खेद इति स्मृत"इति दर्पणलक्षणादत्र खेदोनाम विमर्षसन्ध्यङ्गम्।

अयञ्च श्लोकः "गाढोद्वेगं द्विधा तु मे"त्यत्र "गाढोद्वेगो द्विधान त्वि"त्येतावन्मात्रेण परिवर्त्तित उत्तररामचरितेऽपि दृश्यत इत्यनुसन्धेयम्।

(२४) मकेति। दैवं पूर्व्वकर्म्मार्ज्जितदुरदृष्टमिव दारुणः प्रचण्डकिरणत्वात्तीव्रः विवस्वान् माध्याह्निकः सूर्य्यः निरवग्रहं निष्प्रतिबन्धं यथा स्यात्तथा दहति त्वां सन्तापयति। इयं नितान्तं क्लान्तिसमाक्रान्ता। पद्मसरसः पद्मबहुलसरोवरस्य परिसरे तीरे मुहूर्त्तं कियत्समयं व्याप्य आस्यतां उपविश्यताम्। अत्र दैवमिवेति पूर्णोपमालङ्कारः, लिङ्गभेदोऽप्येतादृशस्थले धीमतामुद्वेगाभावान्नोपमादोषः "यत्रोद्वेगेन धीमता"मिति दण्डिवचनात्।

---

চৈতন্য পরিত্যাগ করিতে পারিতেছে না। বিরহজনিত তাত্রশোক মদ্গাগ শরীর সন্তাপিত করিতেছে, কিন্তু একেবারে ভস্মীভূত করিতেছে না। এবং হৃদয় বিদারণকারী বিধি প্রহার করিতেছে, কিন্তু একেবারে বিনাশিত করিতেছে না।

(২৪) মক। বয়স্য মাধব! দৈবের ন্যায় দারুণ সূর্য্য ও অপ্রতিহত (তোমাকে) দগ্ধ করিতেছে। তোমার শরীরাবস্থাও ক্লান্তিযুক্ত, অতএব এই পদ্মবহুল সরোবরের তীরে কিয়ৎকাল উপবেশন কর, এইস্থানে—

त्वां प्रीणयिष्यति पुर:परिवर्त्तमान-
कल्लोलशीकरतुषारजड़: समीर: ॥ (२५)

इति परिक्रम्योपविशत:। (२६)

मक। [ स्वगतम्। ] भवतु, एवं तावत् अन्यत: प्रक्षिपामि।
[ प्रकाशम्। ] वयस्य माधव!। (२७)

---

(२५) उपवेशनप्रयोजनमाह—उन्नालेति। उद्गतानि रविकिरणशोषपात्यजलतया समुत्थितानि नालानि येषां तथाभूता ये बालकनलाकरा: अचिरविकचपद्मसमूहा: ( आकरो निश्रोत्पत्तिस्थानश्रेष्ठे तु कथ्यत इति मेदिनीकार: ) तेषां मकरन्दनिष्यन्देन मकरन्दसम्बन्धि-स्रवणेन रसप्रस्रवणेनेति यावत्, संवलित: विनिमिश्रित: यो मांसलगन्ध: परिपुष्टसौरभं तेन वन्धु: निवन्, तथा पुर: अग्रे परिवर्त्तमाना: दोदुल्यमाना: ये कल्लोला: विशालसरोवरजलतरङ्गा: तेषां शीकरै: जलै: तुषारवत् हिमवत् जड़: शीतल: ( सुषीम: शिशिरो जड़: ! तुषार: शीतल: शीतो हिम: सप्तान्यलिङ्गका इत्यमर: ) समीर: पवन: त्वां प्रीणयिष्यति क्लान्तिनिवारणेन प्रीत करिष्यति।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासौ शब्दालङ्कारौ, तथा आरोपमाणस्य वन्धुत्वस्य प्रकृतप्रीत-करणोपयोगित्वात् परिणामालङ्कार:, तुषारजड़शब्दयोरापाततमात्रे च शीतलार्थतया पौनरुक्त्य-प्रतिभासनात् पर्यवसाने तु तुषारवत् हिमवत् जड़: शीतल इत्यर्थत्वाच्च पुनरुक्तवदाभासा-लङ्कार: इत्यनयोरङ्गाङ्गिभावेन सङ्कर इति संसृष्टि:। परिणामपुनरुक्तवदाभासलक्षणे दर्पणे यथा—

"विषयात्मतयारोपे प्रकृतार्थोपयोगिनि।
परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधा॥"
"आपाततो यदर्थस्य पौनरुक्त्यावभासनम्।
पुनरुक्तवदाभास: स भिन्नाकारशब्दग:॥" इति।

वसन्ततिलकाछन्द:।

(२८) [illegible]ति। एवं [illegible] प्रकारेण [illegible] इति।

---

(२८) [illegible]

(२९) ( [illegible] )

हा प्रिये मालति! ।

तरुणतमालनीलबहुलोन्नमदम्बुधराः,
शिशिरसमीरणावधूतनूतनवारिकणाः ।
कथमवलोकयेयमधुना हरिहेतिमती-
र्मदकलनीलकण्ठकलहैर्मुखराः ककुभः ॥ (३५)

शोकार्त्तिं नाटयति । (३६)

मक । कोऽप्यतिदारुणो दशाविपाकः सम्प्रति वयस्यस्य ।
[ सास्रम् । ] मया पुनर्वज्रमयेन कोऽपि विनोद आरब्धः ।

---

(३५) तरुणतमालवत् प्रौढतापिच्छवृक्षवत् नीलाः श्यामवर्णाः बहुलाः बहवः उन्नमन्तः उद्गच्छन्तश्च अम्बुधराः मेघाः यासु तथोक्ताः, शिशिरसमीरणैः शीतलपवनैः अवधूताः कम्पिताः नूतनवारिकणाः प्रत्यग्रशीकराः यासु तथोक्ताः, हरिहेतिमतीः इन्द्रचापवतीः यथा मदकलनीलकण्ठानां मदमत्तमयूराणां कलहैः कलकलैः ( कलहं कलकलेऽपि चेति विश्वः ) मुखराः शब्दायमानाः ककुभः दिशः अधुना अस्मिन् मालतीविरहोपभोगकाले कथं केन प्रकारेण अवलोकयेयम् पश्येयम् । समतीवोद्दीपकतया कथमपि द्रष्टुं न शक्नुयामिति भावः ।

अत्रापि चापरूपविशेषे अभिधातव्ये हेतीति समालङ्कारः । नर्द्दटकं नाम वृत्तम् । "यदि भवतो न जौ भजजलागुरुनर्द्दटक"मिति तल्लक्षणम् ।

एवं "कदम्बनीपकुटजैः माहलैः सेन्द्रगोपकैः । मेघवातैः सुखस्पर्शैः प्रावृट्कालं प्रदर्शये"दिति विधानानुसारेण वर्षाकालवर्णनाद्दिष्टं नाम नाट्यलक्षणम् । तथाचोक्तं— देशकालस्वरूपेण वर्णनादिष्टमुच्यते" इति ।

(३६) शोकार्त्तिं चित्तवैधुर्य्यजनितां पीड़ां नाटयति शरीरकम्पादिनाभिनयति ।

---

বর্ষা-সমাগমের সম্পর্কজনিত শোভাধারণকারী সেই সকল দিবস (অর্থাৎ প্রিয়তমাপত্নীর সহিত বিচরণ করিবার জন্য মনোরাজ্যে সন্নিবেশিত দিবসসকল ) এই প্রিয়াবিরহকালে পরিলক্ষ হইতেছে ।

(৩৫) হা প্রিয়ে মালতি! যাহাতে তরুণ তমালবৃক্ষের ন্যায় নীলবর্ণ বহুমেঘ উদ্গত হইতেছে ও শীতল সমীরণ নূতন জলকণাবিকম্পিত হইতেছে চাপযুক্ত এবং ময়ূরকোলাহলে মুখরিত তাদৃশ দিক্‌সকল সম্প্রতি আমি কিরূপে অবলোকন করিব?

(৩৬) ( শোকজনিত পীড়ার অভিনয় )

पयोनिधिशरच्चन्द्र ! हा कामन्दकीमकरन्दानन्दनमुखचन्द्र ! माधव ! अयमेव ते जन्मनि अपश्चिमः पश्चिमावस्थां प्रापितो मकरन्दबाहुपरिष्वङ्गः। स एष मकरन्दो मुहूर्त्तमपि जीवतीति मैवं मंस्थाः। (८१)

आजन्मनः सहनिवासतया मयैव
मातुः पयोधरपयोऽपि समं निपीय।
त्वं पुण्डरीकमुख ! बन्धुतया निरस्त-
मेको निवापसलिलं पिबसीत्ययुक्तम् ॥ (८२)

---

जीवितेश्वरः प्राणनाथः तत्सम्बोधनम्। सौन्दर्य्येण विनिर्जिता पराभूता रतिरमणस्य कामदेवस्य काया छविर्येन तथाभूत ! कामिनीहृदयानां मन्मथ ! कन्दर्पस्वरूप ! तदुन्मादकरेति यावत्। बान्धवाः पित्रादयः एव पयोनिधयः सागरास्तेषां शरच्चन्द्र ! तदाह्लादजनकत्वात् शरच्चन्द्रस्वरूप ! कामन्दकीमकरन्दयोः आनन्दन. आनन्दजनकः मुखचन्द्रः वदनेन्दुर्यस्य तथाभूत, अत्र जन्मनि अयं मया दीयमानः अपश्चिमः इतःपरमपि दातुमभिलषणीयत्वादचरमोऽपि मकरन्दस्य मम बाहुपरिष्वङ्गः आलिङ्गनं पश्चिमतां चरमतां प्रापितः नीतः दैवहतकेनेति शेषः। जीवतीति त्वां विनेत्यादिः। मैवं मंस्थाः एवं मनसि न कुर्य्याः। त्वद्विरहितं ममापि जीवनं न क्षणमपि स्थास्यतीति भावः।

(८२) आजन्मन इति। हे पुण्डरीकमुख ! श्वेतोत्पलवन्मनोरमास्य ! आजन्मनः जन्मन आरभ्य सहनिवासितया एकत्रावस्थानेन हेतुना मयैव समं सार्द्धं मातुः पयोधरपयोऽपि जननीस्तनदुग्धमपि निपीय पीत्वा त्वं एकः एकाकी बन्धुतया पित्रादिबान्धवसमूहेन निरस्तं निक्षिप्तं प्रदत्तमिति यावत्, निवापसलिलं तर्पणजलं (पितृदानं निवापः स्यादित्यमरः) पिबसि

---

আশ্রয় ! হে (দয়াদাক্ষিণ্যাদি গুণ দ্বারা) লোকের শিক্ষক ! হে স্বয়ংগ্রহণে মালতীর জীবিতেশ্বর ! হে (সৌন্দর্য্যে) কামদেব-সৌন্দর্য্যবিজয়কারিন্ ! হে কামিনীহৃদয়কন্দর্প ! হা বান্ধবসমুদ্রশরচ্চন্দ্র ! হা কামন্দকীনয়নানন্দ-ন মুখচন্দ্র ! মাধব ! (চিরাভিলষণীয় বলিয়া) তোমার এজন্মে যাহার শেষ হইত না, তাদৃশ মকরন্দের (আমার) এই ভুজালিঙ্গন দৈব কর্ত্তৃক চরমতা প্রাপিত হইল। সে এই মকরন্দ মুহূর্ত্তকালও জীবিত থাকিবে, এরূপ মনে করিও না।

(৮২) হে পুণ্ডরীকমুখ ! জন্মাবধি আমারই সহিত একত্রাবস্থান বশতঃ

मक। [ विलोक्य। ] अम्ब! कासि? किमहं त्वया प्रतिषिद्धः? (८६)

सौदा। आयुष्मन्! किं त्वं मकरन्दः? (८७)

मक। मुञ्च, स एवास्मि मन्दभाग्यः। (८८)

सौदा। वत्स! योगिनी अस्मि, मालत्या अभिज्ञानञ्च धारयामीति। बकुलमालां दर्शयति। (८९)

मक। [ सोच्छ्वासं सकरुणम्। ] आर्य्ये! अपि जीवति मालती? (९०)

---

(८५) प्रविश्येति। सौदामिनी सहसा द्रुतं प्रविश्य मकरन्दान्तिके समुपस्थाय, वारयित्वा पतनान्निवर्त्त्य आहेत्यर्थः। साहसेन आत्महत्यासाधकेन पर्व्वतशिखरान्नदीपतनरूपसाहसिककर्म्मणा, अलं व्यर्थं।

(८६) मकेति। किं किमर्थं? प्रतिषिद्धः मरणाध्यवसायान्निवारितः।

(८७) मालतीसकाशात् श्रुतं मकरन्दं सम्भाव्य पृच्छति—आयुष्मन्निति।

(८८) तत्कालाभिलषितमरणप्रतिबन्धाद्विरक्त्या कथयति—मुञ्चेति। स एव मकरन्द एव।

(८९) योगिनीति काचिदित्यादि। अभिज्ञानं निदर्शनचिह्नम्।

(९०) सोच्छ्वासमिति, उच्छ्वासेन औत्सुक्येन सहितं यथा स्यात्तथेत्यर्थः। अपि प्रश्ने।

---

(৮৫) সৌদামিনী (সহসা প্রবেশ করিয়া ও নিপতন হইতে মকরন্দকে নিবৃত্ত করিয়া) বৎস! এই মরণসাধক সাহসিক কর্ম্মে কোনও ফল নাই।

(৮৬) মক। মাতঃ! তুমি কে? আমাকেই বা নিবারিত করিতেছ কেন?

(৮৭) সৌদা। আয়ুষ্মন্! তুমি কি মকরন্দ?

(৮৮) মক। পরিত্যাগ কর, আমি সেই মন্দভাগ্যই বটি।

(৮৯) সৌদা। বৎস! আমি যোগিনী, মালতীর চিহ্নও ধারণ করিতেছি। (বকুলমালা দেখাইল)

(৯০) মক (ঔৎসুক্য ও শোকের সহিত) আর্য্যে! মালতী কি জীবিত?

मक। दिष्ट्या पुनः प्रत्यापन्नचेतनो वयस्यः। (८४)

सौदा। [विलोक्य।] संवदति उभयोर्मालतीनिवेदितः शरीराकारः। (८५)

माध। भगवन् पौरस्त्यपवन! (८६)

भ्रमय जलदानम्भोगर्भान् प्रमोदय चातकान्
कलय शिखिनः केकोत्कण्ठान् कठोरय केतकान्।
विरहिणि-जने मूर्च्छां लब्धा-विनोदयति व्यथाम्
अकरुण! पुनः संज्ञाव्याधिं विधाय किमीहसे?॥ (८७)

---

(८३) दिष्ट्या भाग्येन, प्रत्यापन्ना लब्धा चेतना चैतन्यं येन तादृशः।

(८५) विलोक्येति माधवमकरन्दयोः शरीरं विशेषतो निरीक्ष्येत्यर्थः। उभयोः माधवमकरन्दयोः मालतीनिवेदितः परिज्ञानार्थं मालत्या कथितः शरीराकारः देहाकृतिः संवदति दृश्यमानैतद्देहयोः संघटते। तथाच मावेव माधवमकरन्दावित्यत्र नास्ति सन्देह इति भावः। स्वगतोक्तिरियं!

(८६) पौरस्त्यपवन! पूर्व्वदिग्भवप्रभञ्जन!

(८९) भ्रमयेति। अम्भोगर्भान् सलिलाभ्यन्तरान् जलदान् मेघान् भ्रमय जगतामुपकाराय वर्षणार्थं चतुर्द्दिक्षु परिचालय। चातकान् चातकाख्यपक्षिणः प्रमोदय सलिलप्रदानेन सन्तोषय। शिखिनः मयूरान् केकायां स्वकीयशब्दे उत्कण्ठा उत्सुकता येषां तथाभूतान् कलय गर्जनेन विधेहि। तथा केतकान् केतकीतरून् कठोरय जलसेकेन प्रौढ़ान् कुरु। एभिस्तव व्यापारैः कस्यापि क्षतिविरहादापत्तिर्नास्तीति भावः। पुनः किन्तु हे अकरुण! दयालेशशून्य!

---

আমার এই বিরহাবস্থার অবগতি না থাকায় নূতন মেঘের জলবহনকারী পবনেরই (আমার চৈতন্য সম্পাদনরূপ) এই কার্য্য।

(৯৪) মক। ভাগ্যবশতঃই বয়স্য পুনরায় চৈতন্যলাভ করিয়াছে।

(৯৫) সৌদা। (অবলোকন করিয়া) মাধব ও মকরন্দের শরীরাকৃতি মালতী যেরূপ বলিয়াছিল, সেরূপ অবিকলই দেখা যাইতেছে।

(৯৬) মাধ। ভগবন্ পূর্ব্বদিক্প্রভব বায়ো!

(৯৭) সলিলগর্ভ মেঘসমূহকে চতুর্দ্দিকে পরিচালিত কর। চাতক পক্ষিগণকে (জলদান করিয়া) সন্তুষ্ট কর। ময়ূরগণকে (গর্জ্জন দ্বারা)

साध। देव वायो ! तथापि भवन्तमेवं प्रार्थये। (९९)

विकसत्कदम्बनिकुरम्बपांशुना
सह जीवितं वह मम प्रिया यतः।
अथवा तदङ्गपरिवासशीतलं
मयि किञ्चिदर्पय भवान् हि मे गतिः॥ (१००)

कृताञ्जलिः प्रणमति (१)।

---

अत्र प्रथमार्द्धे प्रस्तुते वर्षानिले अप्रस्तुतकामुकव्यवहारसमारोपात् समासोक्तिरलङ्कारः। शार्दूलविक्रीड़ितं वृत्तम्।

(९९) साधेति। तथापि संज्ञाव्याधिविधायित्वेन ममानिष्टकारित्वेऽपि। एवं वक्ष्यमाणम्।

(१००) विकसदिति। प्रिया मालती यतः यस्मिन् प्रदेशे विद्यते तं देशमित्यर्थः, विकसतां प्रस्फुटतां कदम्बानां नीपकुसुमानां निकुरम्बस्य समूहस्य पांशुना :परागेण सह मम जीवितं जीवनं वह प्रापय। तत्काले कदम्बकुसुमानामाधिक्येन विकाशात्तद्वहनस्य च वायोः सम्भवपरत्वादाशासन्यूनतासूचनाय सहोक्तिरिति मन्तव्यम्। पक्षान्तरमाह—अथवेति। अथवा तदङ्गेषु तस्या मालत्याः शरीरेषु परिवासेन समन्तादवस्थानेन शीतलं किञ्चित् यत् किमपि वस्तु मयि अर्पय। तेनापि मम कथञ्चित्शान्तिसम्भवेन महानुपकारः साधितो भवेदिति भावः। अथ तदपि कथं करोमीत्यत:आह—भवानित्यादि। हि यस्मात् भवान् मे मम गतिः सम्प्रति आश्रयः। तथाचाश्रितोपकारसाधनं महतामवश्यमेव कर्त्तव्यमित्याशयः। मञ्जुभाषिणी वृत्तम्।

(१) प्रणमतीति वायुमित्यादि।

---

(৯৮) সক। নিখিল প্রাণীর প্রাণভূত এই বায়ু মাধবের চৈতন্য সম্পাদন-রূপ উচিত কার্য্যই করিয়াছে।

(৯৯) সাধু। দেব পবন! তথাপি আপনাকে এই প্রার্থনা করিতেছি।

(১০০) যেই দেশে প্রিয়া মালতী অবস্থান করিতেছে, কদম্বকুসুমসমূহের পরাগ সহিত আমার জীবনকেও সেই দেশ পাওয়াও। অথবা সেই মালতীর শরীরাবস্থানে শীতল যে কোন বস্তু আমাকে অর্পণ কর। যে হেতু তুমিই সম্প্রতি আমার আশ্রয়।

(১) (কৃতাঞ্জলিপুটে বায়ুকে নমস্কার করিতে লাগিল)

सौदा। सुसमाहितः खलु अभिज्ञानदर्शनस्य अवसरः
अञ्जलौ मालां मुञ्चति। (२)

माध। [ साकूतविस्मयहर्षम् । ] कथमियमस्मद्विरचिता प्रियायाः स्तनोद्गे दद्दुर्ललितमूर्त्तिः अनङ्गमन्दिराङ्गणवकुलप्रसवमाला। [ निरूप्य, सहर्षम् । ] कः सन्देहः। तथाहि स एवायमस्याः—(३)

मुग्धेन्दुसुन्दरतदीयमुखावलोक-
हेलाविसृङ्खलकुतूहलनिह्नवाय।

---

(२) सौदेति। अभिज्ञानप्रदर्शनस्य बकुलमालारूपमालतीचिह्नप्रदर्शनस्य, सुसमाहितः समुचितः अवसरः अयं समयः। अञ्जलौ बाहुनमस्कारकृते हस्ते माधवस्याञ्जलौ।

(३) साकूतविस्मयहर्षमिति, आकूतेन "या बकुलमाला मया मालत्यै समर्पिता सैवेयमस्ति" इत्यभिप्रायेण, विस्मयेन विलुप्तेऽहं मालतीशरीरादेव बकुलमालायाः कथमिह प्राप्तिरित्याश्चर्येण, हर्षेण मालत्यभिज्ञानीभूतमालालाभजनितानन्देन च सह यथा स्यात्तथेत्यर्थः। स्तनोद्देन स्तनयोरुद्गत्या दुर्ललिता दार्ढ्याय स्तनावरणवसनलग्नीकरणात् किञ्चिन्मालिन्यमापादिता मूर्त्तिः कान्तिर्यस्यास्तथाभूता इयं अनङ्गमन्दिरस्य कामदेवायतनस्य अङ्गने चत्वरे यो बकुलः बकुलवृक्षः तत्प्रसवमाला तत्कुसुमनिर्मितं माल्यं कथं केन प्रकारेण? अत्रागतमिति शेषः। समीक्ष्य कः सन्देहः? सैवेयं बकुलमालेत्यत्र कः संशयः? संशयनिरासकं हेतुमभिधातुमाह—तथाहीति। अस्याः बकुलमालायाः, स एवेति वक्ष्यमाणश्लोकान्तस्थितेन भाग इत्यनेनान्वेति।

(४) मुग्धेन्दुरिति। मुग्धः निद्यावरणादिराहित्यात् अत्यतीव मनोहरः य इन्दुचन्द्रः तद्वत् सुन्दरस्य तदीयमुखस्य मालतीवदनस्य अवलोकेन समीक्षणेन या हेला अनादरतावित्यभूता

---

(২) সৌদা। বকুলমালারূপ অভিজ্ঞানপ্রদর্শনের এই উপযুক্ত অবসর।
(মাধবের অঞ্জলিতে বকুলমালার অর্পণ)

(৩) মাধ। (অভিপ্রায় বিস্ময় ও হর্ষের সহিত) প্রিয়তমা মালতীর স্তনদ্বয়ের উপরিদেশে দৃঢ়রূপে স্থাপিত থাকায় বস্ত্রের দ্বারা কিঞ্চিৎ মলিনমূর্ত্তি আমার নির্ম্মিত এই মদনমন্দিরপ্রাঙ্গণস্থিত বকুলবৃক্ষের পুষ্পমালা এই স্থানে আসিল কি প্রকারে? (নিরীক্ষণ করিয়া হর্ষের সহিত) এই যে সেই বকুলমালা তাহাতে আর সন্দেহ কি? যে হেতু—

(৪) মনোহরচন্দ্রের ন্যায় সুন্দর মালতীবদনের অবলোকনজনিত কুতূহল-

[ प्रविश्य मकरन्दः। ]—किमन्यत्,

प्रभवति हि महिम्ना स्वेन योगेश्वरीयम् (१९)

[ नेपथ्ये। ] कथमतिदारुणो जनसंमर्द्दो वर्त्तते ? (२०)

मालत्यपायमधिगम्य विरक्तचेताः,

सांसारिकेषु विषयेषु च जीवितेषु।

---

(१९) विलोक्येति, दूरसमागतं मकरन्दं सहसोपस्थितामलौकिकं तेजोजातञ्च निरीक्ष्येत्यर्थः। साश्चर्यहर्षं आश्चर्यानन्दाभ्यां सह यथा स्यात्तथा आहेति शेषः।

कथमिति। इह अस्मिन् स्थाने मम वत्सः मकरन्दः कथं केन प्रयोजनेन सहसा उपस्थित इति शेषः। तस्य माधवसहचारित्वेनैव स्वाभाविकत्वादिति भावः। तदेतत् परिलोकितं तेजोजातं किं ? किन्निमित्तकम् ?

मकरन्दः सहसा प्रविश्य परिश्रुतस्यास्यैव "तत् किमेत"दिति कामन्दकीप्रश्नस्योत्तरं ददाति—किमन्यदिति। अन्यत् किं न किमपि, इयं हि मदवलोकिता काचित् योगेश्वरी प्रकृष्टयोगसम्पत्शालिनी योगिनी स्वेन महिम्ना स्वकीययोगमाहात्म्येन प्रभवति। तथाच तस्या एवेदं तेजोजातं पूर्व्वमपीतादृशां मदीयतेजसां मया परिलक्षितत्वादिति भावः। अतएव "निर्णयः पुनः अनुभूतार्थकथन"मिति लक्षणादस्य निर्णयो नाम निर्व्वहणसन्धेरङ्गम्।

सहसा तादृशालौकिकतेजःपुञ्जदर्शनेन चकिता एव प्रथमं पतनात् किञ्चिदपेक्षा मकरन्दसन्दर्शनेन च सञ्जातवृत्तान्तावगतिवासनास्ततः सौदामिनीवृत्तान्तमवगत्य सद्य एव च मालतीमाधवावागच्छन्तौ निरीक्ष्य सर्व्वाः पतनाद्विरता इति विभावनीयम्।

(२०) नेपथ्य इति। अज्ञातवृत्तान्तः कश्चिदागन्तुकः जनबाहुल्यमालोक्य पृच्छति—कथमिति। अति दारुणः अति महान् जनसम्मर्द्दः लोकसङ्घर्षः।

(२१) विदितवृत्तान्तः कश्चिद्दुःखाभिभूतवनेचरः पुर्व्वोक्तप्रश्नस्योत्तरमाह—मालत्येति। "करुणवनेचरवचनादन्तरिता"मिति वक्ष्यमाणमाधवोक्तिरेवास्य वनेचरोक्तत्वं समर्थयतीति

---

(১৯) কাম। ( অবলোকন করিয়া আশ্চর্য্য ও হর্ষের সহিত ) আমার বৎস মকরন্দ এস্থানে হঠাৎ আসিল কি প্রয়োজনে ? এই তেজঃপুঞ্জেরই বা হেতু ? ( মকরন্দ প্রবেশ করিয়া ) অন্য আর কি হেতু হইবে ? এই যোগীশ্বরীই যোগপ্রভাবে এই তেজঃপুঞ্জ বিস্তার করিয়াছেন।

( নেপথ্যে ) অতি দারুণ জনসঙ্ঘর্ষ বর্ত্তমান কেন ?

অমাত্য ভূরিবসু মালতীর বিনাশ অবগত হওয়ার পরে সাংসারিক

निक्षिप्य वह्निपतनाय सुवर्णबिन्दु-
मभ्येति भूरिवसुरित्यधुना हताः स्मः ॥ (२१)

मदयन्तिका । लवङ्गिके ! झत्ति मालदीमाहवाणं संदेसमण्णह्लवो त्ति अच्चाहिदं अ (ट) ।

कामन्दकीमकरन्दौ । [ सहर्षम् । ] हा धिक् कष्टम् । आश्चर्य-माश्चर्यम् ! । (२२)

---

(ट) [illegible]

यस्याः पुरा परिचयप्रतिबद्धबीज-
सुद्भूतभूरिफलशालि विजृम्भितं ते ॥ (५१)

मदयन्तिकालवङ्गिके। इयं सा अज्जा सौदामिनी। (प)

माल। वाढं इमाए क्खु भअवदोसंवन्धपक्खवादिणीए णिव्

---

(प) इयं सा आर्य्या सौदामिनी।

---

निःस्वार्थं मालत्युद्धारादिरूपैः बोधिसत्त्वं प्राणव्ययेनापि परोपकारं कर्त्तुं कृतसङ्कल्पं बुद्धविशेषं अतिक्रान्तैः वर्त्तमानैः विलसितैः आचरणैः स्पृहणीया माद्दशामप्याकाङ्क्षणीया सिद्धिः मन्त्रार्थसिद्धिर्यस्यास्तादृशी त्वमेव जगतः सर्व्वलोकानां वन्द्या वन्दनीया नमस्कारयोग्या। तथाच सर्व्वनमस्कारयोग्यायास्तव मन्नमस्कारमप्यनुचितमिव मन्ये इति भावः। यस्यास्ते तव पुरा विद्याग्रहणकाले परिचयः निरतिशयश्रद्धापात्रत्वेनावगतिः स एव प्रतिबद्धं उत्पन्नं बीजं यस्य तथाभूतं इदं विजृम्भितं चेष्टितं मालत्युद्धाराद्याचरणं मिति यावत्। उद्भूतैः सञ्जातैः भूरिभिः बहुभिः फलैः माधवलवङ्गिकादीनां जीवनपालनरूपैः शालते शोभते इति तथोक्तं अभूदिति शेषः। विद्याग्रहणकालसम्बद्धा मयि तवापरिमितश्रद्धैव मालत्युद्धाररूपकार्य्यस्य बीजं तेन च मालत्युद्धाररूपकार्य्येण मालतीशोकेन जीवनविसर्ज्जनोद्यतानां माधवादीनां जीवनरक्षणरूपं प्रचुरतरफलं सम्पादितमिति त्वदीयनिःस्वार्थपरोपकारिता सर्व्वथैवागण्यधन्यवादयोग्येति सरलार्थभावार्थौ।

अत्र विजृम्भिते श्लिष्टविशेषणसाम्येन प्रयत्नोप्तबीजाङ्कुरादिक्रमिकफलशालित्वाद्यादिव्यवहारसमारोपात् समासोक्तिरलङ्कारः। "प्रश्रयादनुवर्त्तनं अनुवृत्ति"रिति लक्षणादनुवृत्तिर्नाम नाट्यालङ्कारश्च। वसन्ततिलकावृत्तम्।

(प) मदेति। इयं परिदृश्यमाना, आर्य्या सौदामिनी सा? या वकुलमालामादाय माधवान्तिकमागता सा किमित्यर्थः।

---

(৫১) আরও দেখ। বোধিসত্ত্ব নামক বুদ্ধবিশেষেরও অতিক্রমণকারী এবম্বিধ (নিঃস্বার্থভাবে মালতীর উদ্ধারাদিরূপ) ব্যবহার দ্বারা যাহার মন্ত্রার্থসিদ্ধি আমাদের ও স্পৃহণীয়, তাদৃশ তুমিই জগতের বন্দনীয়া। যেই তোমার পূর্ব্ব পরিচয়রূপ সমুৎপন্ন বীজজন্য মালতীর উদ্ধাররূপ আচরণ মাধবাদির জীবনরক্ষারূপ সমুৎপন্ন বহুফলশালী হইয়াছে।

(প) মদয়ন্তিকা ও লবঙ্গিকা। এই আর্য্যা সৌদামিনীই কি তিনি?

माधवमकरन्दौ । अहो नु खलु भोः ! । (५२)

अपि चिन्तामणिश्चिन्तापरिश्रममपेक्षते ।
इदं त्वचिन्तितं मन्ये कृतमार्य्यमार्य्यया ॥ (५३)

सौदा । [ स्वगतम् । ] हन्त ! लज्जयति मामेवं सौजन्य मेषाम् । [ प्रकाशम् । ] भगवति ! एतत्प्रहृष्टनन्दनाभिनन्दि‍ते राज्ञा पद्मावतीश्वरेण भूरिवसोः प्रत्यक्षमभिलिख्य पत्रम् आयुष्मत माधवस्य प्रेषितम् । [ इति पत्रमर्पयति । ] (५४)

---

( ५२ ) अहो नु खलु भोरिति हर्षाश्चर्य्यद्योतकमेकमेवाव्ययम् ।

( ५३ ) अपीति । चिन्तामणिरपि प्रार्थकस्य चिन्तानुसारेण फलप्रदो मणिविशेषो चिन्ता परिश्रमं प्रार्थकस्य चिन्तारूपं परिश्रमं अपेक्षते फलदानविषये प्रतीक्षते । तु ... आर्य्यया श्रेष्ठया अनया सौदामिन्या अचिन्तितं अस्माभिरभावितं मालत्यादीनामस्माकं परिरक्षण रूपमचिन्तितकार्य्यमित्यर्थः, कृतं सम्पादितं, इदं आश्चर्य्यं मन्ये ।

अत्रोपमेयभूतायाः सौदामिन्या उपमानाच्चिन्तामणेराधिक्यवर्णनेन व्यतिरेकालङ्कारः, स च श्लेषानुप्राणेन संसृज्यते। तेन च सौदामिन्याः समतीव दयावतीत्वरूपं वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ।

( ५४ ) सौदेति । एतेषां कामन्दक्यादीनां सौजन्यं प्रशंसावादः मां अत्यन्तं निरतिशयं लज्जयति लज्जायुक्तां करोति । आत्मप्रशंसाश्रवणे सज्जनानां लज्जायाः स्वाभाविकत्वादिति भावः । प्रहृष्टेन भूरिवसोरनलप्रवेशनिवारणात् सन्तुष्टेन नन्दनेन अभिनन्दितः परमभाग्यशालितया प्रशंसितः तेन । माधवस्येति समीपे इति शेषः ।

---

(৫২।৫৩) মাধব ও মকরন্দ। অহো কি আশ্চর্য্য!! চিন্তামণিও ফলদান করিতে যাচকের চিন্তারূপ পরিশ্রম অপেক্ষা করিয়া থাকে। কিন্তু এই মাননীয়া যোগিনী আমাদের অচিন্তিত বিষয় সম্পন্ন করিয়াছেন, অতএব ইহা আশ্চর্য্য মনে করিতেছি।

(৫৪) সৌদা। (স্বগত) অহো! ইহাদিগের সৌজন্য আমাকে অত্যন্ত লজ্জিতা করিতেছে। (প্রকাশ্যে) ভগবতি! হর্ষযুক্ত নন্দন কর্ত্তৃক প্রশংসিত রাজা পদ্মাবতীশ্বর ভূরিবসুর সমক্ষে এই পত্র লিখিয়া দীর্ঘজীবী মাধবের সমীপে পাঠাইয়াছেন। (পত্র অর্পণ করিল)

निष्पातश्च समागमोऽपि विहितस्तत्प्रेयसः कान्तया
सम्प्रीतौ नृपनन्दनौ, किमपरं श्रेयस्तदप्युच्यताम् ॥ (६६)

[माध। सहर्षं प्रणमति।] भगवति! अतोऽपि परं प्रियमस्ति तथापि इदमस्तु, भगवतीप्रसादात्। (६७)

---

प्रियतमस्य मकरन्दस्य कान्तया तत् प्रियतमया मदयन्तिकया सह निष्पातः चातुर्य्यपूर्णः समागमः संयोजनमपि विहितः निष्पादितः। तथा नृपनन्दनौ नृपः नन्दनश्चेत्युभौ सम्प्रीतौ सम्यक्प्रीतियुक्तौ, सञ्जाताविति शेषः। स्वकीयाभिप्रायासिद्धावपि योग्यसमागमदर्शनादिति भावः। अपरं एतेभ्यः अन्यत् यत् श्रेयः तवाभीप्सितं मङ्गलं तदपि उच्यतां अभिधीयताम्। मया तदप्यवश्यं सम्पादनीयमिति भावः।

"वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यते" इति लक्षणादेव काव्यसंहारो नाम निर्व्वहणसन्ध्यङ्गम्। शार्दूलविक्रीड़ितं वृत्तम्।

अत्र माधवस्य मालतीलाभ एव कार्य्यं नामार्थप्रकृतिः प्रथमाङ्कादावुपन्यस्तानामनुरागादिरूपबीजाद्यर्थानां सर्व्वेषामेव तत्फलकत्वात्। तल्लक्षणं यथा दर्पणे—

"अपेक्षितन्तु यत् साध्यमारम्भो यन्निबन्धनः।
समापनन्तु यत्सिद्धै तत्कार्य्यमिति सम्मतम् ॥"

एवं मकरन्दस्य मदयन्तिकालाभेन सह माधवस्य मालतीलाभ एव फलावस्था। तल्लक्षणमपि तत्रैव—

"सावस्था फलयोगः स्याद्यः समग्रफलोदयः"।

(६७) माधेति। अतोऽपि परं अतःपरमपि प्रियमस्ति किमिति काकुः। नास्त्येवेत्यर्थः। सर्व्वेषामेव प्रियाणां भगवत्या सम्पादनादिति भावः। तथापि सर्व्वेषां प्रियाणां भगवत्या सम्पादितत्वेऽपि, भगवतीप्रसादात् भगवत्यास्तवानुग्रहात्, इदं वक्ष्यमाणं अस्तु भवतु।

---

সেই মঙ্গল সম্পন্ন হইয়াছে। মদয়ন্তিকার সহিত তোমার পরম প্রিয়তম মকরন্দের চাতুর্য্যপূর্ণ সমাগম ও নিষ্পাদিত হইয়াছে। রাজা এবং নন্দনও প্রীতিযুক্ত হইয়াছে। এখন অপর আর যাহা অভীপ্সিত থাকে তাহাও বল। (আমি সম্পাদন করিব)।

(৬৭) মাধ। (হর্ষের সহিত) ভগবতি! অতঃপরও আর কি প্রিয় আছে? তথাপি আপনার প্রসাদে এই হউক—